तैनम् उद्देशः । यथा—'द्रव्यगुण—' इति ॥ असाधारणधर्मो लक्षणम् । यथा–गन्धवत्त्वं पृथिव्याः ।' लक्षितस्य लक्षणं संभवति न वा' इति विचारः परीक्षा ॥ 'अत्रोद्देशस्य पक्षज्ञानं फलम् लक्षणस्य इतरभेदज्ञानम्॥ परीक्षाया लक्षणदोषपरिहारः –' इति मन्तव्यम् ॥

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः ।**

( न्याय० ) अथ पदार्थान् विभजते—'द्रव्य—' इति ॥अत्र सप्तग्रहणं 'पदार्थत्वं द्रव्याद्यन्यतमत्वव्याप्यम् 'इति व्याप्तिलाभाय ॥ ननु "शक्तिपदार्थस्याष्टमस्य विद्यमानत्वात् कथं'सप्तैव' इति ॥ तथाहि–वह्निसंयुक्तेन्धनादौ सत्यपि मणिसंयोगे दाहो न जायते, तच्छून्ये जायते ॥ अतो 'मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूलाशक्तिरुत्पद्यते ' इति कल्प्यते ॥ तस्माच्छक्तिरतिरिक्तः पदार्थः" इति चेत् ॥ न ॥ मणेः प्रतिबन्धकत्वेन तदभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तिध्वंसकल्पनाया अन्याय्यत्वात् ॥ तस्मात् 'सप्तैव पदार्था'इति ॥

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।**

( न्याय० )द्रव्याणि विभजते— 'पृथिवी—'इति॥ननु"अन्धकारस्य दशमद्रव्यस्य सत्त्वात् कथं 'नवैव ' इति ॥ तथा हि—'नीलं तमश्चलति' इति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम् । न च ' सप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वम् ' इति वाच्यम् ॥ आकाशादिपञ्चकस्य नीरूपत्वात्तमसो नीलरूपत्वाद्वाय्योरपि नीरूपत्वान्न तेष्वन्तर्भावः, तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः संभवति, जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः ॥ तस्मात्तमसो दशमद्रव्यत्वं सिद्धम्"इति चेत्॥ न ॥ तेजसोऽभावेनैवोपपत्तावतिरिक्तकल्पनायां मानाभावात् ॥ नच"विनिगमनाविरहात्तेज एवान्धकारा-

---

१ सत्त्वात्. २ मण्यादिसंयुक्तेन्धनादौ सत्यपि वह्निसंयोगे. ३ शून्ये तु. ४ धाने दाहानुकूलाश. ५ दाहं प्रति मणेः. प्र- ६ इति सिद्धम्. ७ विद्यमानत्वात्. ८ वायोश्चापि. ९ त्वात्पृथिव्या गन्धवत्त्वान्न.

भावस्वरूपम् " इति वाच्यम् ॥ तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्ण-स्पर्शस्याश्रयत्वबाधात् ॥ द्रव्यान्तरकल्पने गौरवात् ॥ तस्मादुष्णस्पर्श-गुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम् । तमसि नीलरूपप्रतीतिस्तु भ्रा-न्तिरेव दीपापसरणक्रियाया एव तत्र भानात् ॥

( पदकृत्य० ) तत्रेति ॥ तत्र ' सप्तपदार्थमध्ये ' इत्यर्थः ॥ द्रव्याणि नवैव इत्यन्वयः ॥ एवं ' तत्र ' इति पदं ' चतुर्विंशतिगुणाः ' इत्यादिष्वप्यन्वेति ॥ द्रव्यत्वजातिमत्त्वं गुणवत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम् ॥

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपर-त्वापरत्वगुरुत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माध-र्मसंस्काराश्चतुर्विंशतिगुणाः ॥

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ॥

परमपरं चेति द्विविधं सामान्यम् ॥

( पद० )परमपरं चेति ॥ परसामान्यम्, अपरसामान्यम् इत्यर्थः ॥ परत्वं चाधिकदेशवृत्तित्वम् ॥ अपरत्वं च न्यूनदेशवृत्तित्वम् ॥

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ॥ समवायस्त्वेक एव ॥

अभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावो-ऽन्योन्याभावश्चेति ॥

गन्धवती पृथिवी । सा द्विधा—नित्याऽनित्या च । नि-त्या परमाणुरुपा ।अनित्या कार्यरूपा । पुनस्त्रिविधा—श-रीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं ग-न्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥

( न्यायबो० ) गन्धवतीति ॥ गन्धवत्त्वं पृथिव्या लक्षणम् ॥ लक्ष्या पृ-

---

१ आश्रयीभूतद्रव्यान्तर. २ नीलत्वादिप्र. ३ आधारस्थनीलरूपस्य दीपाप, आधारस्थदीपा ४ गन्धवत्त्वं गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृ.

थिवी ॥ पृथिवीत्वं लक्ष्यतावच्छेदकम् ॥ यद्धर्मावच्छिन्नं लक्ष्यं,स धर्मो लक्ष्यतावच्छेदकः ॥ यो धर्मो यस्यां अवच्छेदकः सो तद्धर्मावच्छिन्नो ॥ तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना ॥ एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलत्वादीनां लक्ष्यतावच्छेकत्वं बोध्यम्॥

( पद० ) तदेव हि लक्षणम्, यदव्याप्त्यतिव्याप्त्यसंभवरूपदोषत्रयशून्यम् ॥ यथा गोः सास्नादिमत्त्वम् ॥ अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम् ॥ अत एव गोर्न कपिलत्वं लक्षणम्, तस्याव्याप्तिग्रस्तत्वात् ॥ अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् ॥ अत एव गोर्न शृङ्गित्वं लक्षणम्, तस्यातिव्याप्तिग्रस्तत्वात् ॥ असंभवश्च लक्ष्यमात्रावृत्तित्वम् ॥ अत एव गोरेकशफवत्त्वं न लक्षणम्, तस्यासंभवग्रस्तत्वात् ॥ नित्येति ॥ ध्वंसाभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम्॥ ध्वंसे ऽतिव्याप्तिवारणाय ' ध्वंसभिन्नं- ' इत्यादि ॥ घटादावतिव्याप्तिवारणाय विशेष्यदलम्॥ ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वा ऽनित्यत्वम् ॥ यद्भोगायतनं तदेव शरीरम्, चेष्टाश्रयो वा ॥ इन्द्रियमिति ॥ चक्षुरादावतिव्याप्तिवारणाय ' गन्धग्राहकम् ' इति ॥ कालादावतिप्रसक्तिवारणाय ' इन्द्रियम् ' इति ॥ विषय इति॥ शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः॥ शरीरादावतिव्याप्तिनिरासाय भिन्नान्तम् ॥ परमाण्वादावतिप्रसक्तिवारणाय विशेष्यदलम् ॥ कालादिवारणाय ' जन्यत्वे सति ' इत्येतदपि बोध्यम् ॥

**शीतस्पर्शवत्य आपः । ता द्विविधाः—नित्या अनित्याश्च । नित्याः परमाणुरूपाः अनित्याः कार्यरूपाः । पुनस्त्रिविधाः— शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥**

( पद० )शीतेति तेजआदावतिव्याप्तिवारणाय 'शीत' इति ॥ आकांक्षावारणाय ' स्पर्श ' इति ॥ कालादावतिप्रसक्तिवारणाय ' समवायसंबन्धेन ' इति पदं देयम् ॥ इन्द्रियमिति ॥ त्वगादावतिव्याप्तिवारणाय 'रसग्राहकम् ' इति॥

---

१ यस्य २ स ३ न्नः ४ णेषु जलादीनां लक्ष्यता जलत्वादीनां लक्ष्यतोवच्छेदकत्वंच ५ तत एव ६ यथा. ७ ध्वंसभिन्नेति विशेषणम् ८ सत्यन्तम

रसनेन्द्रियरससंनिकर्षादावतिव्याप्तिनिरासाय ' इन्द्रियम् ' इति ॥ सरिदिति॥ आदिनातडागहिमकरकादीनां संग्रहः ॥

उष्णस्पर्शवत्तेजः । तद्विविधम्—नित्यमनित्यं च । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधम्—शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्च चतुर्विधः—भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ॥

( पदकृ० ) उष्णेति ॥ जलादावतिव्याप्तिवारणाय ' उष्ण' इति ॥ का-दावतिव्याप्तिवारणाय ' समवायसंबन्धेन' इति पदं देयम् ॥ इन्द्रियमिति ॥ णादावतिव्याप्तिवारणाय ' रूपग्राहकम् ' इति ॥ कालादावतिव्याप्तिनिरा-य ' इन्द्रियम् ' इति ॥ 'भेदात्' इतिपदं प्रत्येकमभिसंबध्यते ॥ भौममिति॥ ादिपदेन खद्योतगततेजःप्रभृतिपरिग्रहः ॥ विद्युदिति ॥ आदिना रविचन्द्रादि-रिग्रहः ॥ भुक्तेति॥ भुक्तस्यान्नादेः परिणामो जीर्णता तस्य हेतुरुदर्यम्, इत्यर्थः सुवर्णेति ॥ आदिना रजतादेः परिग्रहः ॥

रूपरहितस्पर्शवान् वायुः । स द्विविधः—नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवृत्ति । विषयो वृक्षादिकम्पनहेतुः शरीरान्तः संचारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते

(न्यायबो० ) एवं पृथिव्यादित्रिकं[3] निरूप्य वायुं निरूपयति—रूपरहितेति ॥ रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् ॥ सतिसप्तम्या

१ निरासाय. २ तेः ३ दिकं.

विशिष्टार्थतया रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम् ॥ विशेषणानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिके ऽतिव्याप्तिः, तद्वारणाय विशेषणोपादानम् ॥ तावन्मात्रे कृते आकाशादावतिव्याप्तिः, तत्रापि रूपरहितत्वस्य सत्त्वात् अतउक्तं 'स्पर्श—' इति ॥ अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम्। यथा गोः शृङ्गित्वं लक्षणं कृतं चेत् लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिः, तत्रापि शृङ्गित्वस्य विद्यमानत्वात् ॥ अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् ॥ यथागोर्नीलरूपवत्त्वं लक्षणं कृतं चेत् ॥ (लक्ष्यैकदेशावृत्तित्वं नाम 'लक्ष्यतावच्छेदकाश्रयभूते क्वचिल्लक्ष्ये लक्षणस्याभावोऽसत्त्वमेवाव्याप्तिः' इत्यर्थः) श्वेतगवि(वे) नीलरूपत्वस्याभावात् (अव्याप्तिः) ॥ असंभवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्वम्॥ यथा—गोरेकशफवत्त्वम् गोसामान्ये द्विशफवत्त्वेन एकशफवत्त्वाभात्॥ अतिव्याप्त्यव्याप्त्यसंभवानां (प्रत्येकम्) निष्कृष्टलक्षणं च 'लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्षतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्' अतिव्यप्तिः॥अव्याप्तिस्तु 'लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्' ॥ असंभवस्तु 'लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्' (इति) ॥

(पदकृ०) रूपेति ॥ घटादिवारणाय विशेषणम् । आकाशादिवारणाय विशेष्यम् ॥ इन्द्रियमिति ॥ चक्षुरादिवारणाय 'स्पर्शग्राहकम्' इति॥ कालादिवारणाय 'इन्द्रियम्' इति॥वृक्षेति । आदिपदेन जलादीनां परिग्रहः॥ शरीरेति॥ महावायुवारणाय विशेषणं मनआदिवारणाय विशेष्यम् । धनंजयवारणाय संचारी इति ॥ उपाधीति ॥ 'मुखनासिकाभ्यां निर्गमनप्रवेशनात् प्राणः ॥ जलादेरधोनयनाद् अपानः॥भुक्तपरिणामाय जाठरानलस्य समुन्नयनात् समानः अन्नादेरूर्ध्वनयनाद् उदानः नाडीमुखेषु वितननाद् व्यानः इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियते इत्यर्थः ॥

---

१ ष्टार्थकतया. २ इतःप्रभृति पाठान्तरभिदम् 'गोर्नीलरूपवत्त्वं लक्षणं कृत चेल्लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूतक्वचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः श्वेतगवि. ३ इयंपङ्क्तिष्टिप्पणभूता केनचिट्टीकामध्ये प्रक्षिप्तेति भाति. ४ वत्त्वस्य कुत्राप्यसत्त्वात् ५ तु ६ समानाधिकरणत्वे ७. संचारीति.

शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ॥

( न्यायबो० ) आकाशं लक्षयति—'शब्दगुणकम्' इति ॥ अत्र गुणपदम् 'आकाशे शब्द एव विशेषगुणः' इति द्योतनाय ॥ न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य लक्षणत्वात् ॥ तदुक्तम्—

"रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।

बुद्ध्यादि भावनान्ताश्च शब्दो वैशेषिका गुणाः ॥" इति ॥

तच्चैकमिति ॥ अनेकत्वे मानाभावादिति । विभ्विति ॥ सर्वमूर्तसंयोगित्वं विभुत्वम् ॥ मूर्तत्वं च क्रियाश्रयत्वम् ॥ पृथ्व्यप्तेजोवायुमनांसि मूर्तानि । पृथ्व्यप्तेजोवाय्वाकाशपञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥

( पदकृ० ) शब्देति ॥ शब्दो गुणो यस्य तत्तथा ॥ असंभववारणाय शब्दपदमुन्नेयम् ॥ विभ्विति ॥ सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् ॥

अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥

( न्यायबो० )कालं लक्षयति—अतीतेति ॥ व्यवहारहेतुत्वस्य लक्षणत्वे 'घटः' इति व्यवहारहेतुभूतघटादावतिव्याप्तिवारणाय 'अतीतादि' इति विशेषणोपादानम् ॥

( पदकृ० ) अतीतेति ॥ अतीत आदिर्यो व्यवहारः 'अतीतःभविष्यन्वर्तमान' इत्यात्मकः, तस्यासाधारणहेतुः काल इत्यर्थः ॥ 'नन्विदं लक्षणम् आकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वात् 'इति चेत् न अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात्' नचैवमपि कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम् ॥ विभुत्वस्यापि निवेशात् ॥

'प्राच्यादिव्यवहारहेतु'र्दिक्'। सा चैका नित्या विभ्वी च ॥

( न्यायबो० ) दिशो लक्षणमाह—प्राचीति ॥ उदयाचलसंयुक्ता दिक् प्राची ॥ अस्ताचलसंयुक्ता दिक् प्रतीची ॥ मेरोः संनिहिता दिग् उदीची—मेरोर्व्यवहिता दिग् दक्षिणा ॥

---

१ सम्यक्त्वात् २ पृथिव्य ३ शब्दगुणोभयम् ४ व्याप्तिस्तद.

(पदकृ०) प्राच्येति ॥ 'इयं प्राची' इयं प्रतीची, 'इयमुदीची' इत्यादिव्यवहारासाधारणं (कारणं) दिगित्यर्थः ॥ 'हेतुर्दिक्'इत्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात् 'तद्वारणाय, व्यवहारहेतुः' इति ॥ आकाशादिवारणाय 'असाधारण,इत्यपि बोध्यम् ॥

**ज्ञानाधिकरणमात्मा । स द्विविधः——परमात्मा जीवात्मा चेति तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवः प्रतिशरीरं भिन्नो विभुर्नित्यश्च॥**

(न्यायबो०) आत्मानं निरूपयति–ज्ञानाधिकरणमिति॥ अत्राधिकरणपदं समवायेन ज्ञानलाभार्थम् ॥

(पदकृ०) ज्ञानाधिकरणेति ॥ भूतलादिवारणाय 'ज्ञान' इति ॥ कालादिवारणाय 'समवायेन' इत्यपि देयम् ॥ ईश्वर इति ॥ समवायसंबन्धेन नित्यज्ञानवान् ईश्वरः ॥ जीवेति ॥ सुखादिसमवायिकारणं जीवः ॥

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः । तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ॥**

(न्यायबो०) मनो निरूपयति-सुखादीति ॥ उपलब्धिर्नाम साक्षात्कारः ॥ तथा च 'सुखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणम् ॥ इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः, अतः पूर्वदलम् ॥ विशेष्यानुपादाने आत्मन्यतिव्याप्तिः ,आत्मनो ज्ञानादिकंप्रति समवायिकारणत्वात् अत इन्द्रियत्वरूपविशेष्योपादानम् ॥

(पदकृ०) सुखेति ॥ आत्ममनःसंयोगादिवारणाय 'इन्द्रियम्' इति ॥ चक्षुरादिवारणाय 'सुख' इति ॥

**चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतहरितरक्तकपिशचित्रभेदात्सप्तविधम् । पृथ्वीजलतेजोवृत्ति । तत्र पृथ्व्यां सप्तविधम् । अभास्वरशुक्लं जले भास्वरशुक्लं तेजसि ।**

---

१ अत्रेति नास्ति २ लक्षणं लब्धम् ३ नः सुखादिकं प्रति ४ अत आत्मन्यतिव्याप्तिवारणाय इन्द्रियत्वविशेष्यो. ५ पृथिवीजलतेजो

( न्यायबो० ) रूपं लक्षयति चक्षुर्मात्रेति चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्ववत्त्वं रूपस्य लक्षणम्॥ विशेष्यमात्रोपादाने रसादावतिव्याप्तिः, अतः 'चक्षुर्मात्रग्राह्यः' इति विशेषणम्॥ तावन्मात्रोपादाने रूपत्वे ऽतिव्याप्तिः 'यो गुणो यदिन्द्रियेण गृह्यते-तन्निष्ठा जातिरपि तदिन्द्रियेण गृह्यते' अतस्तद्वारणाय विशेष्योपादानम् ॥ चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्॥ मात्रपदानुपादाने संख्यादिसामान्यगुणे ऽतिव्याप्तिः , संख्यादावपि चक्षुर्ग्राह्य(त्व) विशिष्टगुण(त्व)स्य सत्त्वात् अतस्तत्रातिव्याप्तिवारणाय मात्रपदम्॥ संख्यादेश्चक्षुर्भिन्नत्वग्ग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति ॥ अत्र लक्षणे ग्राह्यत्वं नाम लौकिकप्रत्यक्षविषयत्वम् ॥ अग्राह्यत्वं नाम तदविषयत्वम् ॥ तथा च 'चक्षुर्भिन्नेन्द्रियजन्य(लौकिक)साक्षात्काराविषयत्वे सति चक्षुर्जन्यचाक्षुषविषयत्वम्' इति फलितोऽर्थः ॥ ननु 'प्रभाघटसंयोगे रूपलक्षणस्यातिव्याप्तिः तस्य चक्षुर्मात्रग्राह्यत्वात्' इति चेत् ॥ न गुणपदस्य विशेषगुणमात्रपरत्वात् नचैवं विशेषगुणघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यम्' इति वाच्यम् ॥ जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात् ॥ अथवा चक्षुर्मात्रग्राह्यजातिमद्गुण ( त्व ) स्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः, संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात् ॥ घटसंयोगस्य त्वगिन्द्रियग्राह्यत्वेवत्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् यो गुणो यदिन्द्रियग्राह्यः, तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात् ॥ अत्र जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिः तद्वारणाय तदुपादानम् ॥ एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणे ऽतिव्याप्तिः विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः, अतो विशेषणविशेष्ययोरुपादानम् ॥

( पदकृ० ) चक्षुर्मात्रेति ॥ रूपत्वादिवारणाय गुणपदम् ॥ रसादिवारणाय

---

१ वत्त्वमिति कुत्रचिन्न, २ग्राह्यत्वविशे ३ननु तथापि ४ ग्राह्यगुणत्वात्, ग्राह्यत्वविशिष्टगुणत्वात् ५ मात्रपदं नास्ति ६ ग्राह्यत्वात्तद्र ७ गुणादान ८ गन्धत्वप दंनास्ति ९ प्योभयोपादानम्

'चक्षुर्ग्राह्य' इति । संख्यादिवारणाय मात्रपदम् ॥ यद्यपि प्रभाभित्तिसंयोगवारणाय गुणपदेन विशेषगुणत्वस्य विवक्षणीयतया तत एव संख्यादिवारणे संभवति मात्रपदं व्यर्थम्, तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम् ॥ वस्तुतस्तु परमाणुरूपेऽव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया विशेषपदं न देयम् । त्र्यणुकादिवारणाय गुणपदं तु देयम् ॥ सप्तेति ॥ 'रूपम्' इत्यनुषज्यते ॥

**रसनाग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विधः ।पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव ॥**

( पदकृ० ) रसनेति ॥ रसत्वादिवारणाय 'गुणः' इति ॥ रूपादिवारणाय 'रसन' इति ॥ तत्रेति ॥ पृथिवीजलयोः इत्यर्थः ॥ षड्विधइति ॥ अत्र 'रस'इत्यनुवर्तते ॥

**घ्राणग्राह्यो गुणो गन्धः । स द्विविधः— सुरभिरसुरभिश्च पृथिवीमात्रवृत्तिः ॥**

( पदकृ० ) घ्राणेति॥गन्धत्वादावतिव्याप्तिवारणाय'गुणः' इति॥रूपादावतिव्याप्तिवारणाय 'घ्राणग्राह्यः' इति ॥ पृथिवीति ॥ 'गन्धप्रतीतिसत्त्वे पृथिवीसमवेतसत्त्वम् पृथिवीसंबन्धाभावे गन्धप्रतीत्यभावः' इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव प्रतीतिर्जले बोध्या ननु "देशान्तरस्थकस्तूरीकुसुमसंबन्धिपवनस्यैतद्देशे संबन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः ॥नच 'वाय्वानीतत्र्यणुकादिसंबन्धोऽस्त्येव' इति वाच्यम् ॥ कस्तूर्या न्यूनतापत्तेः कुसुमस्य सच्छिद्रत्वापत्तेः" । इति चेत् ॥ न ॥ भोक्त्रदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तराद्युत्पत्तिः ॥ कर्पूरादौ तु तदभावान्न तथा ॥

---

१ त्वेति नास्ति २ रूपादावतिव्याप्तिवारणाय ३ संबद्धासंयोगस्याव्याप्यवृत्तित्वादिति बोध्यम्,

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स त्रिविधः—शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः ॥**

( न्यायबो० ) स्पर्शं लक्षयति—त्वगिन्द्रियेति ॥ अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय ॥अन्याविशेषणकृत्यं पूर्ववद्बोध्यम्। ग्राह्यत्वपदार्थो ऽपि पूर्ववदेव॥प्रत्यक्षविषयत्वरूप एव बोध्यः॥

( पदकृ० ) त्वगिति ॥ स्पर्शत्वादावतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादावतिव्याप्तिवारणाय 'त्वगिन्द्रिय—' इति ॥ संख्यादिवारणाय मात्रपदम् ॥ तत्रेति ॥ पृथिव्यादिचतुष्टये ॥ शीत इति ॥ शीतस्पर्शः ॥ उष्ण इति ॥ उष्णस्पर्शः ॥

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्रापाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम्॥**

( न्यायबो० ) रूपादीति ॥एतत्तत्त्वनिर्णयश्चेत्थम् पाको नाम विजातीयतेजःसंयोगः॥ स च नानाजातीयरूपजनको विजातीयतेजःसंयोगः ॥ तदपेक्षया रसजनको विजातीयः॥ एवं गन्धजनकोऽपि विजातीयः ॥ एवं स्पर्शेऽपि तथैव एवंप्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः॥यथा तृणपुञ्जनिक्षिप्त आम्रादावूष्मलक्षणविजातीयतेजःसंयोगात्तु पूर्वहरिरूपनाशेन रूपान्तरस्य पीतत्वादेरुत्पत्तिः, न तु रसादेरुत्पत्तिः॥पूर्वरसस्यैवाम्लस्यानुभवात् ॥ क्वचित्पूर्वहरितरूपस्य सत्त्वेऽपि रसपरावृत्तिर्दृश्यते, रसविजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात् ॥ तस्मात्तद्रूपजनकापेक्षया रसजनको विलक्षण एव ॥ एवं गन्धजनकोऽपि विलक्षण एवाङ्गीकार्यः,रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशेऽपि विजातीयपाकवशात्सुरभिगन्धोपलब्धेः ॥ एवं स्पर्शेऽपि पाकवशात्काठिनस्पर्शनाशेन मृदुस्पर्शानुभवात् ॥ तस्माद्रूपादिजनकविजातीयपाकाः ॥ अत एव पार्थिवपर-

माणूनामेकजातीयत्वेऽपि पाकमहिम्नाविजातीयद्रव्यान्तरानुभवः ॥ यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात् पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं[1] वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते, तदुत्तरं तैरेव तादृशरूपरसादय उत्पद्यन्ते ॥ एतादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेणदुग्धारम्भः[2] इति ॥ एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते पाकमहिम्ना ॥ एवं दध्यारम्भकैरेव परमाणुभिर्नवनीतारम्भः[3] इति दिक् ॥

**एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता ।एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ॥**

(पदकृ०) एकादीति । 'एकत्वम्' इत्यादिर्यो व्यवहारः 'एकः द्वौ' इत्याद्यात्मकः । तस्य हेतुः संख्या, इत्यर्थः ॥ पटादिवारणाय 'एकादि' इति ॥ तथा च—

"एकं दश शतं चैव सहस्रमयुतं तथा ॥
लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥
वृन्दं खर्वो निखर्वश्च शङ्खं पद्मश्च सागरः ।
अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम् ॥

इति महदुक्तेः परार्धपर्यन्तैव संख्या, इति भावः ॥

**मानव्यवहारासाधारणकारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम्—अणु महद्दीर्घं ह्रस्वं चेति॥**

(पदकृ०) मानेति ॥ 'मानं परिमितिः' तस्य यो व्यवहारः 'इदमणु' 'इदं महत्' इत्याद्यात्मकः, तस्य कारणं परिमाणम्' इत्यर्थः ॥ दण्डादिवारणाय 'मान' इति ॥ कालादिवारणाय 'असाधारणं' इति ॥ शब्दत्ववारणाय 'कारणम्' इति ॥ नवद्रव्येति ॥ चतुर्विधमपि परममध्यमभेदेन द्वि-

---

१ रूपरसादिकम्; २ महाद्रुग्धारम्भः ३ तादिकमिति

विधम् ॥ तत्र परमाणुत्वह्रस्वत्वे च परमाणुमनसोः ॥ मध्यमाणुत्वह्रस्वत्वे द्व्यणुके ॥ परममहत्त्वदीर्घत्वे गगनादौ ॥ मध्यममहत्त्वदीर्घत्वे घटादौ ॥ 'एतन्मौक्तिकादेतन्मौक्तिकमणु' इति व्यवहारस्य निकृष्टमहत्त्वाद्गौणत्वं बोध्यम् ॥ एवमेव 'केतनाद्व्यजनं ह्रस्वम्' इत्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम् ॥

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥**

( पदकृ० ) पृथगिति ॥ 'अयमस्मात्पृथक्' इति यो व्यवहारः तस्य कारणं पृथक्त्वम्, इत्यर्थः ॥ दण्डादिवारणाय 'पृथक्–' इत्यादि ॥ कालादिवारणाय 'असाधारणं–' इति ॥ पृथग्व्यवहारत्ववारणाय 'कारणम्' इति ॥

**संयुक्तव्यवहारहेतुः संयोगः । नवद्रव्यवृत्तिः ।**

( पदकृ० ) संयुक्तेति ॥ 'इमौ संयुक्तौ' इति यो व्यवहारस्तस्य हेतुः संयोगः, इत्यर्थः ॥ दण्डादिवारणाय 'संयुक्तव्यवहार' इति ॥ कालादिवारणाय 'असाधारण' इत्यपि देयम् । संयुक्तव्यवहारत्वे ऽतिव्याप्तिवारणाय 'हेतुः' इति ॥ उपदर्शितलक्षणचतुष्टये 'असाधारण' पदं देयम् ॥ क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे 'असाधारण' पदं दृश्यते, 'तत्त्वाधुनिकैर्न्यस्तम्' इति बोध्यम् ॥

**संयोगनाशको गुणो विभागः । नवद्रव्यवृत्तिः ।**

( न्याय० ) विभागं लक्षयति–संयोगेति ॥ संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम् ॥ विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिवारणाय गुणत्वविशेषणम् ॥

( पदकृ० ) संयोगेति ॥ संयोगनाशजनक इत्यर्थः ॥ काले ऽतिप्रसक्तिनिवारणाय गुणपदम् ॥ ईश्वरेच्छादिवारणाय 'असाधारण' इत्यपि बोध्यम् ॥ ननु 'असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यात्' इति चेत् ॥ न ॥ क्रियायामतिप्रसक्तिवारणाय तस्याप्यावश्यकत्वात् ॥

**परापरव्यवहारासाधारणकारणे परापरत्वे । ते द्विविधे दिक्कृते कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । जेष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ॥**

---

१ सर्व. २ सर्व.

( पदकृ० ) परेति ॥ 'परव्यवहारासाधारणं कारणं परत्वम् ॥ अपरव्यवहारासाधारणकारणम् अपरत्वम्' इत्यर्थः ॥ दण्डादिवारणाय 'परव्यवहार' इति ॥ कालादिवारणाय 'असाधारण' इति । परव्यवहारत्ववारणाय 'कारण' इति ॥ एवमेव द्वितीये बोध्यम् ॥

**आद्यपतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ।**

( न्यायबो० ) गुरुत्वं लक्षयति—आद्येति ॥ द्वितीयपतनक्रियायां वेगस्यैवासमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय 'आद्य' इति ॥ उत्तरलक्षणेऽप्याद्यविशेषणं पूर्ववद्योजनीयम् ॥

( पदकृ० ) आद्येति ॥ दण्डादिवारणाय 'असमवायि' इति ॥ रूपादिवारणाय 'पतन' इति ॥ वेगेऽतिव्याप्तिवारणाय 'आद्य' इति

**स्यन्दनासमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकंच। तत्र सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ॥**

( पदकृ० ) स्यन्दनेति ॥ दण्डादिवारणाय 'असमवायि' इति । रसादिवारणाय 'स्यन्दन' इति॥

**चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥**

( न्यायबो० ) स्नेहं लक्षयति—चूर्णादीति ॥ चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् ॥ पिण्डीभावो नाम चूर्णादिधारणाकर्षणहेतुभूतो विलक्षणसंयोगः ॥ तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वम् ॥ न तु जलादिगतद्रवत्वस्य[1], तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादिपिण्डीभावापत्तेः ॥ अतः स्नेह एवासाधारणकारणम् ॥ विशेषणमात्रोपादाने कालादावतिव्याप्तिः, तद्वारणाय विशेष्योपादानम् ॥

---

१ द्रवत्वस्येत्यनन्तरम् 'असाधारण[illegible]रणत्वमस्तु इति नच वाच्यम्' इति क्वचित्पाठोस्ति.

स्तुतस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वम्, स्नेहस्य पिण्डीभावहेतु-
मानाभावात् ॥ जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥

( पदकृ० ) चूर्णादीति ॥ 'चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः स चूर्णादिः
स्य पिण्डीभावः संयोगविशेषः तस्य हेतुर्निमित्तकारणं स्नेहः' इत्यर्थः।काला-
वतिव्याप्तिवारणाय गुणपदम् ॥ रूपादावतिव्याप्तिवारणाय ' पिण्डीभाव'
ति ॥ चूर्णपदं स्पष्टार्थम् ॥

**श्रोत्रग्राह्यो गुणः ' शब्दः ' । आकाशमात्रवृत्तिः । स द्वि-
विधः ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्या-
दौ, वर्णात्मकः संस्कृतभाषारूपः ।**

( न्यायबो० ) शब्दं लक्षयति—श्रोत्रग्राह्य इति ॥ शब्दत्वेऽति-
ाप्तिवारणाय ' गुणः' इति ॥ स त्रिविधः—संयोगजो विभागजः श-
जश्चेति भेरीदण्डसंयोगजन्यो भांकारादिशब्दः, हस्तवातसंयोगादिज-
ो मृदङ्गादिशब्दः ॥ वंशे पाट्यमाने दलद्वयविभागजन्यः पटपटादिश-
ः ॥ शब्दोत्पत्तिदेशमारभ्य कर्णविवरपर्यन्तं वीचीतरङ्गन्यायेन कदम्ब
कुलन्यायेन वा निमित्तपवनसंबन्धाच्छब्दधारा जायते तत्रोत्तरोत्तरशब्दे
वेशब्दः कारणम् ॥

( पदकृ० ) श्रोत्रेति ॥ शब्दत्वेऽतिव्याप्तिवारणाय ' गुणः' इति ॥ रू-
ादिवारणाय ' श्रोत्रग्राह्यः ' इति ॥ वस्तुतस्तु श्रोत्रोत्पन्नशब्दस्यैवश्रोत्रग्रा-
त्वेन तद्भिन्ने ऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद्गुणपदमनुपादे-
मेव ॥

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्। सा द्विविधा-स्मृतिरनुभवश्च॥**

( न्यायबो० ) बुद्धेर्लक्षणमाह— सर्वव्यवहारेति ॥ व्यवहारः शब्दप्र-
ोगः, ज्ञानं विना शब्दप्रयोगासंभवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञान-
स्य लक्षणम् ॥ बुद्धिं विभजते— स्मृतिरनुभवश्चेति ॥

---

१ भावः. २ पिण्डं, ३ रेतिकादेः ४ भेर्यादिशब्दः ५ चटपटायमानशब्दः
श्रोत्र ७ पवनेन निमित्तपवनेन शब्दसंबन्धधारा जा०

( पदकृ० ) बुद्धिलक्षणमाह—सर्वेति ॥ सर्वे ये व्यवहारा आहारविहारादयः तेषां हेतुर्बुद्धिः, इत्यर्थः ॥ दण्डादिवारणाय 'सर्वव्यवहार ' इति कालादिवारणाय 'असाधारण ' इत्यपि देयम् ॥

**संस्कारजन्यं ज्ञानं स्मृतिः ॥**

( न्यायबो० ) स्मृतिं लक्षयति– ( संस्कारेति ) ॥ संस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् ॥ विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिः' तद्वारणाय विशेषणोपादानम् ॥ संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम् ॥ [1]ध्वंसे प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् ॥

( पदकृ० ) संस्कारेति ॥ संस्कारध्वंसे ऽतिव्याप्तिवारणाय' ज्ञानम्' इति । अनुभवेऽतिव्याप्तिवारणाय ' संस्कारजन्यम् ' इति । तथापि प्रत्यभिज्ञायामतिव्याप्तिवारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम् ॥ क्वचित्तथैव पाठः नचैवं सत्यसंभवः ॥ तस्य संस्कारजन्यत्वे सतीन्द्रियार्थसंनिकर्षाजन्यार्थत्वात् ॥

**तद्भिन्नं ज्ञानमनुभवः । स द्विविधः—यथार्थोऽयथार्थश्च ॥**

( न्यायबो० ) अनुभवं लक्षयति– ( तद्भिन्नमिति ) ॥ ताद्भिन्नत्वं नाम [2]स्मृतिभिन्नज्ञानत्वम् ॥ तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिः, अतस्तद्वारणाय [3]तयोरुपादानम् ॥ अनुभवं विभजते– स द्विविध इति ॥

( पदकृ० ) तदिति ॥ स्मृतित्वावच्छिन्नभिन्नमित्यर्थः ॥ तेन यत्किंचित्स्मृतिभिन्नत्वस्य स्मृतौ सत्त्वेपि न क्षतिः । घटादावतिव्याप्तिवारणाय ' ज्ञानम्' इति ॥ स्मृतिवारणाय ' ताद्भिन्नम्' इति ॥

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः—सव प्रमेत्युच्यते ॥**

---

१ ध्वंसं प्रति स्वप्रतियो० २ स्मृतिभिन्नत्वम्. स्मृतिभिन्नत्वविशिष्टज्ञानत्वम्. ३ विशेषणविशेष्योभयोरु०

( न्यायबो० ) यथार्थानुभवं लक्षयति—तद्वतीति ॥ 'तद्वति' इत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः। तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं यथार्थानुभवस्य लक्षणम् ॥ उदाहरणम्—रजते 'इदं रजतम्' इति ज्ञानं रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकम् ॥ 'तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वम्, इति निष्कर्षः ॥ अन्यथा यथाश्रुते, रङ्गरजतयोः 'इमे रजतरङ्गे' इत्याकारकसमूहावलम्बनभ्रमे ऽतिव्याप्तिः ॥ तत्रापि रजतत्ववद्विशेष्यकत्व—रजतत्वप्रकारकत्वयो रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारत्वयोः सत्त्वात्। उक्तनिष्कर्षे तु नातिव्याप्तिः रजतत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाभावात्, रङ्गत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वाभावात्, किंतु समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वात्॥ एवं रजतांशे रङ्गत्वावगाहित्वेन रङ्गत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाच्चेति ॥ ( नानाधर्मप्रकारताशालि एकं ज्ञानं समूहालम्बनम् ॥ )

( पदकृ० ) तद्वतीति ॥ तदेव प्रकारो यस्य स तथेत्यर्थः। 'तद्वद्विशेष्यकतत्प्रकारकः' इति यावत् ॥ स्मृतिधारणा 'अनुभवः' इति । अयथार्थानुभवनिरसनाय 'तद्वति' इति ॥ निर्विकल्पकेऽतिव्याप्तिवारणाय 'तत्प्रकारकः' इति ॥

तदभाववति तत्प्रकारको ऽनुभवो ऽयथार्थः ॥

( न्यायबो० ) अयथार्थानुभवं लक्षयति—तदभाववतीति ॥ अत्रापि पूर्ववत् तदभाववद्विशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं विवक्षणीयम् ॥ अन्यथा रङ्गरजतयोः 'इमे रङ्गरजते' इत्याकारकसमूहालम्बनभ्रमायामतिव्याप्तिः । एतत्समूहालम्बनस्य रङ्गरजतोभयविशे-

१तत्प्रकारकानुभवत्वम्' २ कुत्रचिन्निष्ठपदं नास्ति. ३ रजतरंगयो. ४ 'नाव्याप्तिः.' इति नास्ति ५ रजतत्ववद्रजतविशे. ६ रंगत्ववद्रंगविशे. ७ नानागुणिशेष्यतानिरूपितनानाधर्म. इत्यधिकंकुत्रचिदेव दृश्यते. तट्टिप्पणीरूपमिवाभा ८ तद्वतीत्यर्थः. ९ वारणाय. १० ज्ञानपदं कुत्रचिन्नास्ति. ११ कारकस्थले. लम्बने. १३ व्याप्तेः. १४ रजतरंगो०.

। ष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशे-
ः ष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रका-
रकत्वयोश्च सत्त्वात् ॥ निष्कर्षे तु रजतांशे रजतत्वावगाहित्वेन रङ्गांशे
रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गविशेष्यता-
निरूपितत्वाभावात्; एवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतविशे-
ष्यतानिरूपितत्वाभावात्, नातिव्याप्तिः ॥ उदाहरणम्—यथा शुक्तौ
(इदं रजतम्) इति ॥

(पदकृ०) तदभाववतीति ॥ 'तदभाववद्विशेष्यकतत्प्रकारको ऽनुभवोऽ-
यथार्थानुभवः' इति ॥ यथा शुक्तौ 'इदं रजतम्' इति ज्ञानम् । स्मृतिवा-
रणाय 'अनुभवः' इति ॥ यथार्थानुभवनिरसनाय 'तदभाववति' इति ॥
निर्विकल्पकवारणाय 'तत्प्रकारकः' इति ॥

## यथार्थानुभवश्चतुर्विधः-प्रत्यक्षानुमित्युपमितिशाब्दभेदात्॥

(न्यायबो०) यथार्थानुभवं विभजते—'चतुर्विधः' इति ॥

(पदकृ०) यथार्थेति ॥ यथार्थानुभवः 'प्रत्यक्षमेव' इति चार्वाकाः, 'अनु-
मितिरपि' इति काणादबौद्धाः, 'उपमितिरपि' इति नैयायिकैकदेशिनः,
'शाब्दमपि' इति नैयायिकाः, 'अर्थापत्तिरपि' इति प्राभाकराः 'अनुप-
लब्धिको ऽपि' इति भाट्टवेदान्तिनौ, 'सांभविकैतिह्यकावपि' इति पौराणिकाः, चै-
ष्टिको ऽपि' इति तान्त्रिकाः ॥ एतेषां मतेऽस्वरसं संभाव्य तस्य चातुर्विध्यं स्प-
ष्टं दर्शितम् ॥

## तत्करणमपि चतुर्विधम् प्रत्यक्षानुमानोपमानशब्दभेदात् ॥

(न्यायबो०) तत्करणमिति ॥ फलीभूतप्रत्यक्षादिकरणं चतुर्विधम् इ-
त्यर्थः ॥ प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम् ॥ ए-
कैकप्रमाणलक्षणं तु वक्ष्यते, प्रत्यक्षज्ञान—, इत्यादिना ॥

(पदकृ०) तदिति ॥ यथार्थानुभवात्मकप्रमायाः करणम्, इत्यर्थः ॥

१कत्वं. २ उक्तनिष्कः ३ रजतांशे रजत ४ रंगत्वांशेरंग ५ च ६ खण्डनाय. इदमवतरणं कुत्रचिन्नास्ति. ८ अस्वरसात्तस्य. ९ प्रमाणस्य.

## असाधारणं कारणं करणम् ॥

( न्यायबो० ) करणलक्षणमाह—असाधारणमिति ॥ 'व्यापारवद-साधारणं कारणं करणम्, इत्यर्थः । असाधारणत्वं च' कार्यत्वव्याप्यध-र्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्, इत्यर्थः । यथा दण्डादौ घ-टं प्रत्यसाधारणकारणत्वम् ॥ कार्यत्वव्याप्यो घटत्वादिरूपधर्मः, तदवच्छि-न्नकार्यता घटे, तन्निरूपितकारणता दण्डे, अतो घटं प्रति दण्डो ऽसाधार-णकारणम् । भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम् ॥ साधारणत्वं च का-र्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् ॥ ईश्वरेच्छादृष्टादेः का-र्यत्वावच्छिन्नंप्रत्येव कारणत्वात्साधारणकारणत्वम् ॥

( पदकृ० ) असाधारणमिति ॥ कालादिवारणाय 'असाधारण' इति ॥ व्यापारे ऽतिव्याप्तिवारणाय 'व्यापारवद्' इत्यपि देयम् ॥ व्यापारश्च द्रव्या-न्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकः । ईश्वरेच्छादिवारणाय 'तज्जन्यत्वे सति' इति ॥ कुलालजन्यत्वे सति कुलालजन्यघटजनकत्वं कुलालपुत्रस्याप्य-स्ति, अतस्तत्रातिव्याप्तिवारणाय प्रथमं सत्यन्तम् ॥ दण्डरूपादिवारणाय तज्जन्य-जनकः' इति ॥

## कार्यनियतपूर्ववृत्ति कारणम् ॥

( न्यायबो० ) कारणं लक्षयति—कार्यनियतेति ॥ कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वम् ॥ नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यात, अतो 'नियतत्वे सति, इति विशेषणम् ॥ नियत-पूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यात, अतः 'अनन्यथासिद्धत्वम्' अपि कारणलक्षणे निवेशनीयम्, दण्डरूपादेरन्यथासिद्धत्वात् ॥

( पदकृ० ) कार्येति ॥ 'कार्यान्नियताऽवश्यंभाविनी पूर्ववृत्तिः पूर्वक्षणवृत्तिर्ये-

---

१ असाधारणं च. २ कार्यत्वातिरिक्तधर्मा ३ कुत्रचिन्नास्ति. ४ त्वं च. ५ कार्यत्वातिरिक्तो. ६ णत्वम्. ७ कारणत्वं च८ ईश्वरादृष्टादेः. ९ अनन्यथासि-द्धका.१० कारणत्वम्. ११ विशेषणाभावे. १२ विनियतपूर्वव. १३ घटादीति कुत्रचिन्न १४ नियतविशेपणम् १५ घटादिकारणता. १६ सिद्धपदमपि;१७कार णत्वल: १८ दीनांतुअ. १९ अनन्यथेति

स्य तत्तथा ' इत्यर्थः ॥ अनियतरासभादिवारणाय 'नियत' इति । कार्यकारणा- य 'पूर्वे' इति । दण्डत्वादिवारणाय 'अनन्यथासिद्धत्व' विशेषणस्यावश्य- कत्वेन तत एव रासभादिवारणसंभवे नियतपदमनर्थकम् ॥ एवं च 'अनन्यथा- सिद्धकार्यपूर्ववृत्ति कारणम्' इति फलितम् ॥ अनन्यथासिद्धत्वमन्यथा- सिद्धिशून्यत्वम् । अन्यथासिद्धिश्च ' अवश्यक्लृप्तपूर्ववर्तिन एव कार्यसंभवे तत्सह- भूतत्वम् ' । यथा—अवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटरूपकार्य- संभवे तत्सहभूतत्वं दण्डत्वादौ, इति तदन्यथासिद्धम् ॥

**कार्यं प्रागभावप्रतियोगि ॥**

( न्यायबो० ) कार्यं लक्षयति—प्रागिति ॥ प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम् ॥ कार्योत्पत्तेः पूर्वम् 'इह घटो भविष्यति, इति प्रतीतिर्जायते ॥ 'एतत्प्रतीतिविषयो'[5] ऽभावः 'प्रागभावः' तत्प्रतियोगि घटादिरूपं कार्यम् ॥

( पदकृ० ) प्रागिति ॥ कालादिवारणाय ' प्राग् ' इति ॥ असंभववा णाय ' प्रतियोगि ' इति ॥

**कारणं त्रिविधम्—समवाय्यसमवायिनिमित्तभेदात् ॥**

( न्यायबो० ) कारणं त्रिविधमिति ॥ समवायिकारणम्, असमवायि- कारणम्, निमित्तकारणं चेति ॥

**यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः पटस्य । पटश्च स्वगतरूपादेः ॥**

( न्यायबो० ) समवायिकारणं लक्षयति—यत्समवेतमिति ॥ 'यस्मिन् समवेतं सत् समवायेन संबद्धं सत् कार्यम् उत्पद्यते तत्समवायिकारणम्' इत्यर्थः ॥ उदाहरणम्— 'यथा तन्तवः' इति । 'तन्तुषु समवायेन संबद्धं सत् पटात्मकं कार्यमुत्पद्यते इति तन्तवः समवायिकारणम्, इत्यर्थः ॥ सामान्यलक्षणं तु— ' समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसं-

१ सिद्धिविशे. २ कार्यपदं नास्ति. ३ क्लृप्तनियतपू-. ४ भूतदण्ड-. ५ विषयी- भूतोऽभा.

न्धावच्छिन्नकारणत्वं समवायिकारणत्वम्' इति। समवायसंबन्धेन घटादिकरणे कपालादौ कपालादेस्तादात्म्यसंबन्धेनैव सत्त्वात् समवायसंबन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः ॥ 'जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन द्रव्यस्यैव कारणत्वात्। जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्' अतो गुणादावपि द्रव्यमेव समवायिकारणम् इत्याशयेनाह 'पटश्च स्वगतरूपादेः' इति ॥ 'समवायिकारणम्' इत्यनुपज्यते ॥

(पदकृ०) यदिति ॥ 'यस्मिन् समवायसंबन्धेन वर्तमानम्' तत् इति भावः। चक्रादिवारणाय 'समवेतम्' इति ॥

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणमसमवायिकारणम्। यथा तन्तुसंयोगः पटस्य। तन्तुरूपं पटगतरूपस्य ॥**

(न्यायबो०) असमवायिकारणं लक्षयति—कार्येणेति ॥ 'कार्येण सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम्' इत्यन्वयः, 'कारणेन सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम्' इत्यन्वयः। जन्यद्रव्यमात्रे ऽवयवसंयोगस्यैवासमवायिकारणत्वात्, 'पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वम्' इति दर्शयति—'यथा तन्तुसंयोगः पटस्य' इति ॥ पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवेतं सत् समवायसंबन्धेन वर्तमानं सत् पटात्मककार्यं प्रति तन्तुसंयोगात्मकं कारणमसमवायिकारणमित्यर्थः ॥ द्वितीयसमवायिकारणम् 'कारणेन सह' इत्यादिना पूर्वोक्तमुदाहरति—'तन्तुरूपम्' इति ॥ कारणेन सह पटरूपसमवायिकारणीभूतपटेन सह एकस्मिन्नर्थे तन्तुरूपे ऽर्थे समवेतं सत् समवायसंबन्धेन वर्तमानं सत् तन्तुरूपं पटरूपं प्रति कारणं भवति, अतो ऽसमवायिकारणं तन्तुरूपं पटरूपस्य ॥ सामान्यलक्षणं तु 'समवायसंबन्धावच्छिन्नकार्यतानिरूपिता या समवाय-स्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छि

१ वच्छिन्नकपालत्वावच्छिन्नकार. २ 'द्रव्ये तु द्रव्यावयवाः समवायिकारणं' अतो ३ त्वगादि ४ इत्यर्थः ५ द्रव्ये ६ दर्शयति

न्ना कारणता तादृशकारणताश्रयत्वम् असमवायिकारणत्वम् ' इति॥ द्र-
व्यासमवायिकारणीभूतावयवसंयोगादौ तु समवायसंबन्धावच्छिन्नघटत्वा-
वच्छिन्नकार्यतानिरूपिता समवायसंबन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा
कारणता कपालद्वयसंयोगे वर्तते ॥ एवम् आद्यपतनक्रियायां आद्यस्य-
दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः । आद्यपतनक्रियां
ाति आद्यस्यन्दनाक्रियां प्रति च समवायसंबन्धेनैव तयोः कारणत्वात् ॥
अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्वसंबन्धेनैव कारणत्वा-
[ तत्संबन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते ॥ अवयवगुणभूत
पालतन्तुरूपादेःस्वशब्दग्राह्यकपालरूपतन्तुरूपसमवायिकपालतन्तुसमवे-
त्वसंबन्धेन घटपटादौ कपालरूपतन्तुरूपयोः सत्त्वात् ॥

( पदकृ० ) कार्येणेति ॥ कार्येण सह कारणेन सह वा एकस्मिन्नर्थे समवे-
त्वे सति, आत्मविशेषगुणभिन्नत्वे सति, यत्कारणं तदसमवायिकारणम् ॥
न्तुसंयोगादावव्याप्तिवारणाय 'कार्येण' इति ॥ तन्तुरूपादावव्याप्तिवारणाय
कारणेन' इति ॥ आत्मविशेषगुणेऽतिव्याप्तिवारणाय' आत्मविशेषगुणभिन्नत्वे
ति' इति ॥ विशेषवारणाय 'कारणम्' इति ॥

**तदुभयभिन्नं कारणं निमित्तकारणम् । यथा—तुरीवेमा-
दिकं पटस्य ॥**

( न्यायबो० ) तदुभयभिन्नमिति ॥ 'समवाय्यसमवायिकारणभिन्नम्'
यर्थः ॥

( पदकृ० ) तदुभयभिन्नं कारणं निमित्तकारणम् इति॥ समवाय्यसमवा-
कारणवारणाय 'तदुभयभिन्नम्' इति । विशेषादावतिव्याप्तिवारणाय
ारणम्' इति ॥

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥**

( न्यायबो० ) तदेतदिति ॥ 'यदसाधारणम्' इति ॥ 'व्यापारवत्त्वे
ते, इत्यपि पूरणीयम् ॥ अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः, त-

---

. तदाश्रयत्वम्. २कार्येण कारणेन वा सहैक- ३ वायिभिन्नकारणमित्य-४गादौ

न्तुकपालसंयोगयोरपि कार्यत्वंव्याप्यपटत्वघटत्वाद्यवच्छिन्नं प्रति कारणत्वादसाधारणत्वमस्त्येवेति, अतस्तत्र करणत्ववारणाय 'व्यापारत्त्वे सति' इति करणलक्षणे विशेषणं देयम् ॥ व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम् ॥ भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद् भ्रम्यादेर्दण्डव्यापारत्वम् ॥ एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वम् कपालसंयोगतन्तुसंयोगयोः कपालजन्यत्वे तंतुजन्यत्वे सति तज्जन्यघटपटजनकत्वात् ॥ करणलक्षणे ऽसाधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारत्वे सति कारणत्वस्य सत्त्वात् तत्रातिव्याप्तिवारणाय 'असाधारण' इति पदोपादानम् ॥

( पदकृ० ) तदेतादिति ॥ यस्मात्कारणात् करणत्वेघटकं कारणमुपदर्शितम् तस्मादेतत्त्रिविधसाधकमध्ये यत्साधकतमं तदेव करणम् इति भावः ॥ इति करणप्रपञ्चः ॥

**तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥**

( न्यायबो० ) षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति ॥ प्रमाणभूतेषु, प्रत्यक्षात्मिकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं (तत्) प्रति कारणं व्यापारवदसाधारणम् इंद्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् ॥ आद्यसंनिकर्षातिरिक्तचतुर्विधसंनिकर्षाणां समवायघटितत्वेनेन्द्रियजन्यत्वाभावाँद्व्यापारत्वं न संभवति, इतीन्द्रियमनःसंयोगस्यैव षड्विधप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या ॥

( पदकृ० ) तत्रेति ॥ प्रमाणचतुष्टयमध्ये ॥ दण्डादिसंयोगवारणाय 'ज्ञान' इति ॥ अनुमानादिवारणाय 'प्रत्यक्ष' इति ॥

**(ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् ) ॥ इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद्द्विविधम्—निर्विकल्पकं सविकल्पकं चेति॥**

---

१ कार्यत्वातिरिक्त. २ व्यापारवत्त्वात्करणत्वं स्यात् व्यापारवत्कारणत्वस्य सत्त्वात्त- ३ करणघ. ४ स्यवर्णो नास्ति ५ षड्विधप्रत्य- ६ करणंव्यापारवदसाधारणं कारणमिन्द्रियं ७ संभवात् ८ संयोगपदं कुत्रचिन्नास्ति

( न्यायबो० ) प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—ज्ञानाकरणकमिति । क्षेपकं लक्षणमिदम् ॥ ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च तदेव करणं येषां ते ज्ञानकरणका अनुमित्युपमितिशाब्दाः,ज्ञानकरणकं, न भवतीति ज्ञानाकरणकं [ तत्त्वम् ] प्रत्यक्षलक्षणम् । प्रत्यक्षे इन्द्रियाणामेव करणत्वात्, न तु ज्ञानस्य करणत्वम् ॥ इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् ईश्वरप्रत्यक्षस्याजन्यत्वात् । अतो जन्यप्रत्यक्षस्यैव लक्ष्यत्वमादाय तल्लक्षणम्—इन्द्रियार्थसंनिकर्षेति । जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेणेदम्॥ प्रत्यक्षं द्विधा विभजते—'निर्विकल्पकम्' इति ॥

( पदकृ० ) इन्द्रियार्थेति ॥ 'इन्द्रियं चक्षुरादिकम् , अर्थो घटादिः, तयोः संनिकर्षः संयोगादिः, तज्जन्यं ज्ञानं प्रत्यक्षम् ' इत्यर्थः । संनिकर्षध्वंसवारणाय 'ज्ञानम् ' इति । अनुमित्यादिवारणाय ' इन्द्रियार्थसंनिकर्ष ' इति ॥ ननु 'सोपनेत्रचक्षुषा कथं पदार्थग्रहणम्, चक्षुष उपनेत्रनिरुद्धत्वेन पदार्थेन संनिकर्षाभावात्' 'कथं वा स्वच्छजान्हवीसलिलावृतमत्स्यादेश्चक्षुषा ग्रहणम् ' इति चेत्॥ न । स्वच्छद्रव्यस्य तेजोनिरोधकत्वाभावेन तदन्तश्चक्षुःप्रवेशसंभवात् ॥ नच-ईश्वरप्रत्यक्षे ऽव्याप्तिः । इति वाच्यम् । अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात् ॥

**तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥**

( न्यायबो० ) निष्प्रकारकमिति ॥ 'प्रकारताशून्यत्वमेव निर्विकल्पकत्वम्' इत्यर्थः ॥ निर्विकल्पके चतुर्थी विषयता स्वीक्रियते नतु त्रिविधविषयतामध्ये कांऽपि तत्रास्ति अतो' विशेष्यताशून्यज्ञानत्वम् ' इत्यपि लक्षणं संभवति ॥

(पदकृ० ) तत्र निष्प्रकारकमिति ॥ सविकल्पके ऽतिव्याप्तिवारणाय 'निष्प्रकारक' इति।प्रकारवारणाय ' ज्ञानम् ' इति॥

**सप्रकारकं ज्ञानं सविकल्पकम् ॥ यथा—'डित्थोऽयम्, ब्राह्मणो ऽयम्, श्यामो ऽयम्'इति ॥**

---

१ उक्तम्. २ प्रत्यक्षप्रमालक्षणम्. ३तद्भिन्नत्वं प्रत्यक्षे. ४ ईश्वरीय. ५ ईश्वरीय. ६ इदं लक्षणम्.७ यथा. ८ सहेत्यधिकम्. ९ कुत्रचिन्नोपलभ्यते. १०एकापि.

( न्यायबो० ) सप्रकारकमिति ॥ विषयताया ज्ञाननिरूपित
ज्ञानस्य विषयतानिरूपकत्वेन, प्रकारतानिरूपकज्ञानत्वं सविकल्प
लक्षणम् ॥ उदाहरणम्—यथेति । इदंत्वावच्छिन्नविशेष्यतानिरूपि
त्थत्वप्रकारताशालिज्ञानं ब्राह्मणत्वप्रकारताशालिज्ञानं च सविक
मित्यर्थः ॥

(पदकृ०) सप्रकारेति ॥ घटादिवारणाय ' ज्ञानम् ' इति निर्विकल्पव
णाय ' सप्रकारकम् ' इति ॥

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसंनिकर्षः षड्विधः—संयोगः, संयु-क्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसम-वायः, विशेषणविशेष्यभावश्चेति ॥**

( न्यायबो० ) चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान्षड्विधसं
र्षान्विभजते 'संयोगः' इत्यादिना ॥ द्रव्यवृत्तिलौकिकविषयतासंब
चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगः कारणम्। द्रव्यसमवेतवृत्तिलौकिक
षयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम
व्यसमेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नंप्रति
क्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम् । द्रव्यसमेतसमवेतवृत्तिलौकिक
षयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य
त्वम् ॥ द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि
णरसनश्रवणानि तु गुणग्राहकाणि ॥ अतस्त्वगिन्द्रियस्थले द्रव्य
लौकिकविषयतासंबन्धेन त्वाचत्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतु
एवं द्रव्यसमवेतत्वाचत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतु
द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्त
वेतसमवायस्य हेतुता, एवम् आत्मरूपद्रव्यमानसप्रत्यक्षे मनःसंयो
हेतुता आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य हे

---

१ विशेषणताशून्यत्वमिव विशेष्यताशून्यत्वं संसर्गताशून्यत्वमित्यपि ल. २ त
प्रत्यक्षत्वा. ३ द्रव्यसमवेतविषयकत्वाचप्रत्यक्षत्वा.

आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता ॥ रसनघ्राणयोस्तु रसगन्ध–तद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव तत्र हेतुता वाच्या ॥ श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण[1] समं शब्दस्य समवायः संनिकर्षः । शब्दवृत्तिशब्दत्व[2]जातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता ॥ अभावप्रत्यक्षे विशेषणविशेष्यभावो नाम विशेषणतासंनिकर्षः । पञ्चविधसंनिकर्षोपरि विशेषणता योजनीया तथाहि-द्रव्याधिकरणकाभावप्रत्यक्षे संयुक्तविशेषणता । द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता । द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता ॥ संयोग[3]स्थाने संयुक्तत्वं घटयित्वा समवायस्थाने समवेतत्वपदं घटयित्वा अभावप्रत्यक्षस्थले निर्वाह्यम् ॥ यथा घटद्रव्यसमवेतं घटत्वं पृथिवीत्वा[4]दि रूपादिकं च ॥ तत्र नीलादौ पीतत्वाभावः, घटत्वादिजातौ पटत्वाभावश्च वर्तते । स चाभावः संयुक्तसमवेतविशेषणतासंनिकर्षेण गृह्यते । ( एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रियसंयुक्तसमवेतसमवेतविशेषणतासंनिकर्षेण गृह्यते ) । पटसमवेतं नीलं, तत्समवेतं नीलत्वं, तद्विशेषणता पीतत्वाभावे वर्तत इति संक्षेपः ॥

( पदकृ० ) प्रत्यक्षेति ॥ तच्च प्रत्यक्षं षड्विधम्–घ्राणज–रासन–चाक्षुष–श्रोत्र–त्वाच–मानसभेदात् ॥ ननु 'प्रत्यक्षकारणीभूतेन्द्रियसंनिकर्षप्रत्यक्षसामानाधिकरण्यघटकः संनिकर्षः कः' इत्यपेक्षायां विभज्य दर्शयति–प्रत्यक्षेति । 'लौकिकप्रत्यक्ष'- इत्यर्थः ॥

## चक्षुषा घटप्रत्यक्षजनने संयोगः संनिकर्षः ।

( पदकृ० ) संयोगमुदाहरति-चक्षुषेति ॥ तथा च 'द्रव्यचाक्षुषत्वाचमानसेषु संयोग एव संनिकर्षः' इति भावः ॥

---

१ चेत्यधिकम्. २ शब्दत्वकत्वखत्वगत्वादि. ३ संयोगस्थाने समवायस्थाने च संयुक्तपदं समवेतपदं च. ४ दिकं. ५ निष्ठ.

घटरूपप्रत्यक्षजनने संयुक्तसमवायः संनिकर्षः । चक्षुःसंयुक्ते घटे रूपस्य समवायात्

( पदकृ० ) घटरूपेति ॥ 'चक्षुषा ' इत्यनुषज्यते ॥ तथा च द्रव्यसम
चाक्षुषरासनघ्राणजस्पार्शनमानसेषु संयुक्तसमवाय एव संनिकर्ष इत्यर्थः ॥

रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः संनिकर्षः । चक्षुःसंयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात्

( पदकृ० ) रूपत्वेति ॥ रूपत्वात्मकं यत्सामान्यम्, तत्प्रत्यक्ष इत्
अत्रापि ' चक्षुषा ' इत्यनुषज्यते ॥ तथा च ' द्रव्यसमवेतसमवेतचाक्षुषरा
घ्राणजस्पार्शनमानसेषु संयुक्तसमवेतसमवाय एव संनिकर्षः ' इति भावः॥
' द्रव्य-तत्समवेतप्रत्यक्षेऽपि संयुक्तसमवाय एव संनिकर्षोऽस्तु ' इति चे
नैतत् । ईश्वरात्मादेरनध्यक्षत्वप्रसंगात् ॥

श्रोत्रेण शब्दसाक्षात्कारे समवायः संनिकर्षः कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् । शब्दस्याकाशगुणत्वात् । गुणगुणिनोश्च समवायात् ॥

( पदकृ० ) समवायसंनिकर्षमुदाहरति--श्रोत्रेणेति ॥ ' जननीये '
शेषः ननु ' श्रोत्रशब्दयोः कथं समवायः ' इत्यपेक्षमाणं प्रति तमुपपाद्य व
यति--कर्णेति ॥ अथ 'समवायस्य नित्यत्वेन शब्दप्रत्यक्षे को व्यापारः '
चेत् ॥ ' शब्दः श्रोत्रमनःसंयोगो वा ' इति गृहाण ॥

शब्दत्वसाक्षात्कारे समवेतसमवायः संनिकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥

( पदकृ० ) शब्दत्वेति ॥ श्रोत्रेण ' ' जननीये ' इत्यनुकर्षशेषो ॥

अभावप्रत्यक्षे विशेषणविशेष्यभावः संनिकर्षः।घटाभाववद्भूतलम्, इत्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥

---

१ चक्षुषा जनन इति. २ चाक्षुषत्वाचमानसरासनघ्राणजेषु.

( पदकृ० ) विशेषणेति ॥ विशेषणभावो विशेष्यभावः । इन्द्रियसंबद्धविशेषणत्वम्, इन्द्रियसंबद्धविशेष्यत्वम् , इति यावत् ॥ विशेषणभावसंनिकर्षमुपपाद्य दर्शयति—घटाभाववदिति ॥ ' इह भूतले घटो नास्ति ' इत्यादौ विशेष्यतासंनिकर्षोऽवसेयः । सप्तम्यन्तस्य विशेषणत्वात् ॥

**एवं संनिकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् ॥**

( पदकृ० ) प्रत्यक्षप्रमामुपसंहरति—एवमिति। ' उपदर्शितक्रमेण' इत्यर्थः।

**तत्करणमिन्द्रियम् । तस्मात् ' इंद्रियं प्रत्यक्षप्रमाणम् ' इति सिद्धम् ॥**

( पदकृ० ) ननु ' सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसंनिकर्षः किं न स्यात्' इति चेत् ॥ ' न ' इत्याह[२]—तत्करणमिति ॥ प्रत्यक्षप्रमाणं निगदय[३]ति—तस्मादिति ॥ प्रत्यक्षप्रमाकरणत्वादित्यर्थः ॥ सिद्धमिति ॥ न्यायसिद्धान्ते सिद्धमित्यर्थः ॥

इति प्रत्यक्षपरिच्छेदः समाप्तः ।

**अनुमितिकरणमनुमानम् ॥**

[ न्यायबो० ] अनु[४]मानं लक्षयति—अनुमितीति ॥ अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः, अनुमितिः फलं कार्यमित्यर्थः ॥ परामर्शस्य व्याप्तिज्ञानजन्यत्वाद् व्याप्तिज्ञानजन्यानुमितिजनकत्वाच्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारलक्षणमुपपन्नम् ॥ अनुमितिकरणत्वमनुमानस्य लक्षणम् । अनुमानं च व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रति असाधारणकारणतया ऽनुमितिकरणत्वमुपपन्नम् ॥

( पदकृ० ) प्रत्यक्षानुमानयोः कार्यकारणभावसंगतिमभिप्रेत्यप्रत्यक्षानन्तरमनुमानं निरूपयति—अनुमितीति ॥ 'अनुमितेः करणम् अनुमानम् ' इत्यर्थः ॥त-

---

१ वक्ष्येति बोध्यम्. २ व्यापारत्त्वाभावादिति भावः. ' फलायोगव्यवच्छिन्नं कारणम्' इति मते तु संन्निकर्ष एव प्रत्यक्षप्रमाणम् इति बोध्यम्. ३ निगमयति. ४ अवतरणप्रतीके क्वचिन्न स्तः.

लिङ्गपरामर्श एव ' इति निवेदयिष्यते ॥ कुठारादावतिव्याप्तिवारणाय 'अ-ति ' इति । प्रत्यक्षादावतिव्याप्तिवारणाय ' अनु ' इति ॥

**परामर्शजन्यं ज्ञानमनुमितिः ॥**

( न्यायबो० ) परामर्शजन्यमिति ॥ 'परामर्शजन्यत्वे सति' इति सप्तम्या विशिष्टत्वमर्थः । परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्ष-॥ तत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणा-परामर्शजन्यत्वे सति ' इति विशेषणोपादानम् । विशेषणमात्रोक्तौ ध्वंसे ऽतिव्याप्तिः, अतो ज्ञानत्वोपादानम् ॥

( पदकृ० ) ननु ' अनुमितेरेव दुर्निरूप्यत्वात् तद्घटितमनुमानमपि दुर्नि-म् ' इत्यत आह—परामर्शेति ॥ प्रत्यक्षादावतिव्याप्तिवारणाय ' परामर्श-म् ' इति । परामर्शध्वंसवारणाय ' ज्ञानम् ' इति । परामर्शप्रत्यक्षवारणा-हेत्वविषयकम् ' इत्यपि बोध्यम् ॥

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा—वह्निव्याप्य-धूमवानयं पर्वतः,इति ज्ञानं परामर्शः। तज्जन्यम् 'पर्वतो व-ह्निमान्' इति ज्ञानमनुमितिः ॥**

( न्यायबो० ) व्याप्तिविशिष्टेति ॥ 'व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञा-नं' इति कर्मधारये विशिष्टपदस्य प्रकारकपरत्वात् ' पक्षधर्मताज्ञा-' इत्यत्र षष्ठ्या विषयत्वबोधनात् धर्मतापदस्य संबन्धार्थकत्वाच्च र्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्गलाभेन च ' व्याप्तिप्र-कारकाभिन्नं यत् पक्षसंबन्धिविषयकं ज्ञानं तत् परामर्शः ' इति लभ्य-। एवं सति ' धूमो वह्निव्याप्यः, घटवान् पर्वतः ' इति समूहाल-म्बने परामर्शलक्षणं गतम्, तद्वारणाय ' पक्षविशेष्यतानिरूपिता या प्रकारता, तन्निरूपिता या व्याप्तिनिष्ठप्रकारता, तच्छालि ज्ञानं प-रामर्शः ' इति निष्कर्षः ॥ एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वम् अ-

१ प्रत्यक्षे. २ अतस्तद्वारणाय 'ज्ञानः' ३ व्याप्तिविशिष्टपक्षधर्मताज्ञानमिति-रयः तद्विशिष्टस्य पदस्य प्रकारपरत्वात्प्रकारतापरत्वात्. ५ पक्षधर्मता. ६ स-मासेन. ७ लगति. ८ हेतुनिष्ठप्रका.

नुमितेर्लक्षणम् ॥ अनुमितिपरामर्शयोर्विशिष्यकार्यकारणभावश्चेत्थम्—
'पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छि-
न्नविधेयताकानुमितित्वावच्छिन्नं प्रति वन्हिव्याप्तिप्रकारतानिरूपिता
या धूमवत्त्वावच्छिन्ना प्रकारता, तन्निरूपिता पर्वतत्वावच्छिन्ना विशे
ष्यता, तच्छालिनिर्णयः कारणम्' इति ॥ स च निर्णयः 'वन्हिव्या-
प्यधूमवान् पर्वतः' इत्याकारकः ॥

(पदकृ०) व्याप्तिविशिष्टेति ॥'विषयितासंबन्धेन व्याप्तिविशिष्टपक्षधर्मता-
ज्ञानं परामर्शः' इत्यर्थः ॥ घटादिज्ञानवारणाय 'पक्षधर्मता' इति । 'धूमवान्
पर्वतः' इति ज्ञानवारणाय 'व्याप्तिविशिष्ट–' इति ॥ तदिति ॥ 'परामर्शज-
न्यम्' इत्यर्थः ॥

**'यत्रयत्र धूमस्तत्र तत्र वह्निः' इति साहचर्यनियमो व्याप्तिः ॥**

(न्यायबो० ) यत्रयत्रेति । यत्र पदे वीप्सावशाद्धूमाधिकरणे
यावति वह्निमत्त्वलाभात् यावत्पदमहिम्ना धूमव्यापकत्वं वन्हौ लब्धम्
[3]देवं स्पष्टयति—साहचर्यनियम इति ॥ एतदर्थस्तु 'नियतसाहचर्यं
याप्तिः'इति । नियतत्वं व्यापकत्वम् । साहचर्यं नाम सामानाधि-
रण्यम् तथाच 'धूमव्यापकवन्हिसामानाधिकरण्यं व्याप्तिः' इत्यर्थः ॥
त्रि धूमव्यापकत्वं नाम धूमसमानाधिकरणात्यन्ताभावप्रतियोगिता-
वच्छेदकधर्मवत्त्वम् । तादृशधर्मो वन्हौ वन्हित्वम् । तथाहि—धूमाधि-
करणे ॥ पर्वतमहानसचत्वरादौ वर्तमानोऽभावः घटत्वावच्छिन्नप्रति-
योगिताकाभावो, न तु वन्हित्वावच्छिन्नप्रतियोगिताकोऽभावः । कुतः—
र्वतादौ वन्हेः सत्त्वात् । एवं सति धूमाधिकरणे पर्वतादौ वर्तमानस्य
घटाभावस्य प्रतियोगितावच्छेदकं घटत्वम्, पटाभावस्य प्रतियोगि-

१धूमपदं कुत्रचिन्नास्ति. २ लब्धमित्यस्यानन्तरं 'तथाच धूमव्यापकवह्निमत्' इत्यधिकः पाठः. ३ तदेवेत्यादिर्नियतत्वं व्यापकत्वमित्यन्तःपाठः कुत्रचिन्नास्ति. ४ धूमनियतवन्हिसामानाधिकरण्यं धूमव्यापक.- ५ अत्रेत्यादिः, अयमन्वय-व्याप्तिः सिद्धान्तानुसारेणेत्यन्तः पाठः कुत्रचिन्नास्ति. अत्रवन्हौ व्यापक-

तावच्छेदकं पटत्वम्, अनवच्छेदकं वन्हित्वम्, तादृशं वन्हित्वं वन्हौ वर्तते । अतो धूमव्यापकत्वं वन्हौ वर्तते, ( तस्याधिकरणे पर्वतादौ वृत्तित्वं धूमे वर्तते ) इति । इयमन्वयव्याप्तिः सिद्धान्तानुसारेण ॥ पूर्वपक्षीयव्याप्तिस्तु 'साध्याभाववदवृत्तित्वम्'—साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निरूपितं यद्धेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वम्, तादृशवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावो व्याप्तिः ॥ तच्च केवलान्वयिन्यव्याप्तम्' इति सिद्धान्तानुसारेण लक्षणसमन्वयः ॥

( पदकृ० ) यत्रयत्रेति ॥– 'तत्र तत्राग्निः' इति व्याप्तेरभिनयः । 'साहचर्यनियमः' इति लक्षणम् । 'सहचरति' इति सहचरः, तस्य भावः साहचर्यं सामानाधिकरण्यम्' इति यावत् । तस्य नियमो व्याप्तिरित्यर्थः । स चाव्यभिचरितत्वम् ) तच्च व्यभिचाराभावः । व्यभिचारश्च साध्याभाववद्वृत्तित्वम् । तथा च साध्याभाववदवृत्तित्वं व्याप्तिरिति पर्यवसन्नम् ' महानसो वन्हिमान् धूमात्, इत्यादौ ' साध्यो वन्हिः, तदभाववाञ्जलन्हदादिः, तद्वृत्तित्वं नौकादौ, अवृत्तित्वं प्रकृते हेतुभूते धूमे ' इति कृत्वा लक्षणसमन्वयः ॥ ' धूमवान् वन्हेः ' इत्यादौ ' साध्यो धूमः, तदभाववत् अयोगोलकम्, तद्वृत्तित्वमेव वन्ह्यादौ ' इति नातिव्याप्तिः ॥

## व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता

( पदकृ० ) ननु ज्ञातेयं व्याप्तिः, 'पक्षधर्मताज्ञानम्' इत्यत्र 'का नाम पक्षधर्मता' इत्यपेक्षमाणं प्रति तत्स्वरूपं निरूपयति—व्याप्यस्येति ॥'व्याप्यो नाम व्याप्त्याश्रयः स च धूमादिरेव, तस्य पर्वतादिवृत्तित्वं पक्षधर्मता ' इत्यर्थः

## अनुमानं द्विविधम्—स्वार्थं परार्थं च ।

( पदकृ० ) अथ ' कथमनुमानमनुमितिकरणम्, कथं वा तस्मादनुमितिजनिः ' इति जिज्ञासमानं प्रति, लाघवादनुमानविभागमुखेनैव बुबोधयिषुरनुमानं विभजते—अनुमानमिति ॥ द्वैविध्यं दर्शयति स्वार्थं परार्थं चेति ॥

१प्रतियोगिव्यधिकरणसाध्याभा २ द्रष्टव्यम्. ३ यत्र यत्र धूमस्तत्र तत्राग्निरिति.४ इत्यादि पर्यवसन्नमित्यन्तः पाठः क्वचिन्नास्ति.५व्याप्त्याश्रयज्ञानमनुमितिः ।

स्वार्थं स्वानुमितिहेतुः। तथाहि—स्वयमेव भूयोदर्शनेन 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः, तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्निः' इति। तदनन्तरं 'वन्हिव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात् 'पर्वतो वन्हिमान्' इति ज्ञानमनुमितिरुत्पद्यते। तदेतत्स्वार्थानुमानम्॥

(न्यायबो०) स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम्॥

(पदकृ०) स्वार्थमिति॥ स्वस्यार्थः प्रयोजनं यस्मात्तत्स्वार्थमिति समासः। स्वप्रयोजनं च स्वस्यानुमेयप्रतिपत्तिः॥ एवं 'परार्थम्' इत्यस्यापि। अयमिति॥ व्याप्तिबलेन लीनमर्थं गमयति, इति लिंगम्। तच्च धूमादिः। तस्य परामर्शो ज्ञानविशेष इत्यर्थः॥ तस्मादिति॥ लिङ्गपरामर्शादित्यर्थः॥ स्वार्थमुपसंहरति—तदेतदिति॥ यस्मादिदं स्वप्रतिपत्तिहेतुः, तस्मादेतत्स्वार्थानुमानमित्यर्थः॥

यत्तु स्वयं धूमादग्निमनुमाय परप्रत्ययार्थं[2] पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम्। यथा 'पर्वतो अग्निमान्, धूमवत्त्वात्, यो यो धूमवान् स सोऽग्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथा, इति। अनेन प्रतिपादिताल्लिंगात्परोऽप्यग्निं प्रतिपद्यते॥

(न्यायबो०) न्यायप्रयोज्यानुमानं परार्थानुमानम् न्यायत्वं च प्रतिज्ञादिपञ्चकसमुदायत्वम्॥ अवयवत्वं प्रतिज्ञाद्यन्यतमत्वम्॥

(पदकृ०) क्रमप्राप्तं परार्थानुमानमाह—यदिति॥ 'यत् पञ्चावयववाक्यं प्रयुज्यते, तत् परार्थानुपानम्' इति संबन्धः॥ पञ्चावयवेति॥ अथ अवय-

१ तस्मात् २ परप्रतिपत्त्यर्थं।

वत्वं नाम द्रव्यसमवायिकारणत्वम्, ' प्रतिज्ञादिषु तदसंभवात्कथमेतेऽवयवाः स्युः ' इति चेत् ॥ ' अनुमानवाक्यैकदेशत्वात्तु, अवयवाः' इत्युपचर्यन्ते इति गृहाण ॥ नन्वेवमपि पञ्चावयववाक्यस्यानुमानत्वमेव न विचारसहम् । तस्य लिङ्गपरामर्शत्वाभावात् ॥ इति चेत् ॥ मैवम् । लिङ्गपरामर्शप्रयोजकलिङ्गप्रतिपादकत्वेन ' अनुमानम् ' इत्युपचारमात्रत्वात् ॥ तदुदाहरति—यथेति ॥ तथा चायमिति ॥ ' अयं च पर्वतः तथा वह्निव्याप्यधूमवान् ' इत्यर्थः ॥ तस्मात्तथेति ॥ ' वन्हिव्याप्यधूमवत्त्वात् वन्हिमान् ' इत्यर्थः ॥ अनेनेति । 'अनेन पञ्चावयववाक्येन ' इत्यर्थः ॥

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। 'पर्वतोऽग्निमान् ' इति प्रतिज्ञा, ' धूमवत्त्वात्' इति हेतुः, 'यो यो धूमवान् ससोऽग्निमान्'—इत्युदाहरणम्, 'तथा चायम् ' इत्युपनयः, 'तस्मात्तथा' इति निगमनम् ॥**

( पद० ) ननु ' पञ्चावयववाक्यम् ' इत्यत्र के ते पञ्चावयवाः, अतस्तान्दर्शयति—प्रतिज्ञेति ॥ प्रतिज्ञाद्यन्यतमत्वम् अवयवत्वम् ॥ साध्यविशिष्टपक्षबोधकवचनं प्रतिज्ञा । पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनं हेतुः ॥ व्याप्तिप्रतिपादकदृष्टान्तवचनम् उदाहरणम् । उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकं वचनम् उपनयः । पक्षे साध्यस्याबाधितत्वप्रतिपादकवचनं निगमनम् ॥ इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन् विशिष्य दर्शयति—पर्वतो वन्हिमानित्यादिना ॥

**स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥**

( पदकृ० ) लिङ्गेति ॥ 'ज्ञायमानं लिङ्गमनुमितिकरणम् ' इति वृद्धोक्तं न युक्तम् । ' इयं यज्ञशाला वन्हिमती अतीतधूमात् ' इत्यादौ लिङ्गाभावेप्यनुमितिदर्शनात्—इत्यभिप्रायवान् ' लिङ्गपरामर्श एव करणम् ' इत्याचष्टे—'लि-

ङ्गपरामर्श एव ' इति। अनुमानमुपसंहरति—तस्मादिति ॥ अनुमितिकरणत्वादित्यर्थः ॥ ' अयमेव तृतीयज्ञानम् ' इत्युच्यते। तथाहि—महानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमम्, पक्षे यद्धूमज्ञानं तद्द्वितीयम्, अत्रैव वन्हिव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम्, अयमेव लिङ्गपरामर्श इत्युच्यते॥ अनुमानमिति ॥ ' व्यापारवत्कारणं करणम् ' इति मते ' व्याप्तिज्ञानमेवानुमानम्, लिङ्गपरामर्शो व्यापारः' इत्यवसेयम् ॥

**लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति ॥ अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि ॥ यथा वन्हौ साध्ये धूमवत्त्वम्। ' यत्र धूमस्तत्राग्निः, यथा महानसम्' इत्यन्वयव्याप्तिः। ' यत्र वन्हिर्नास्ति तत्र धूमोपि नास्ति, यथा ह्रदः' इति व्यतिरेकव्याप्तिः ॥**

( न्यायबो० ) अन्वयेनेति ॥ व्यापकसामानाधिकरण्यरूपव्याप्तिमानित्यर्थः ॥ व्यतिरेकेणेति ॥ व्यतिरेको नामाभावः। तथा च साध्याभावहेत्वभावयोर्व्यतिरेकव्याप्तिः। इयं ( त्थं ) च 'यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावः' इति यत्र पदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकपरतया धूमाभावे वह्न्यभावव्यापकत्वं लब्धम् ॥ एवं च वन्ह्यभावनिष्ठव्याप्तेः स्वाश्रयीभूतवन्ह्यभावव्यापकीभूताभावप्रतियोगित्वसंबन्धेन धूमनिष्ठतया गृहीतव्यतिरेकव्याप्तिमत्त्वेन व्यतिरेकित्वेन, धूमव्यापकवह्निसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेनान्वयित्वेन च गृह्यते ॥ व्यतिरेकपरामर्शस्तु ' वन्ह्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वतः' इत्याकारकः ॥

( पद० ) अन्वयव्यतिरेकिणो लक्षणमाह--अन्वयेनेति ॥ तृतीयायाः प्रयोज्यत्वमर्थः। साध्यसाधनयोः साहचर्यमन्वयः, तदभावयोः साहचर्यं व्यति-

---

१ महानसम्. २ "मूलग्रन्थस्तु 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति मतमवलम्ब्य इति बोध्यम्।

रेकः ॥ तथा च ' अन्वयप्रयोज्यव्याप्तिमद् व्यतिरेकप्रयोज्यव्याप्तिमद् अन्वयव्यतिरेकि ' इत्यर्थः ॥ केवलव्यतिरेकिव्याप्त्यतिव्याप्तिवारणाय ' अन्वयेन' इति । केवलान्वयिनि व्यभिचारवारणाय ' व्यतिरेकेण ' इति ॥ तथा च अन्वयव्याप्तिरुपदर्शितैव । व्यतिरेकव्याप्तिश्च ' साध्याभावव्यापकीभूताभावप्रतियोगित्वम् ' इत्यर्थः ॥ तदुक्तम्—

" व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते । तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥ अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोन्यथा व्याप्यो व्यापकः साधनात्ययः " इति ॥

**अन्वयमात्रव्याप्तिकं केवलान्वयि ॥ यथा—'घटोऽभिधेयः प्रमेयत्वात् पटवत्' इति। अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च ॥**

( न्यायबो० ) व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम् ॥ साध्ये केवलान्वयित्वम् अत्यन्ताभावाप्रतियोगित्वम् । तथाच ' अभावाप्रतियोगिसाध्यव्यापकत्वं' केवलान्वयिहेतोर्लक्षणम् ॥ एतल्लक्षणं हेतोर्व्यतिरेकित्वे[1] न संगच्छते । साध्ये केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावात् 'अन्वयमात्रव्याप्तिकं केवलान्वयि' इति मूलकारोक्तलक्षणमुपपन्नम् ॥ अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् ॥ नच 'एवं संयोगाभावे कालाभावे चाव्याप्तिः'[2] इति वाच्यम् ॥ स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्य तदर्थत्वात् ॥ 'एकजातीयसंबन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वम्' इति नव्याः

( पदकृ० ) केवलान्वयिनो लक्षणमाह—अन्वयेति ॥ अन्वयेनैव व्याप्तिर्यस्मिन्स तथा ॥ प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिं निराकरोति—अत्रेति ॥ ' अभिधेयत्वसाधकानुमाने ' इत्यर्थः ॥ ननु कुतस्तन्निषेधः, अतस्तत्र हेतुमाह—सर्वस्येति ॥ पदार्थमात्रस्येत्यर्थः ॥ तथा च सकले पदाभिधेयत्वस्ये[illegible]

---

१ व्यतिरेकिशून्यत्वे सति संगच्छते. २ इति नाव्याप्तिः

रप्रमाविषयत्वस्य चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावाप्रसिद्ध्या तद्घटितव्यतिरेकव्याप्तिर्न संभवत्येवेति भावः ॥

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि ॥ यथा—पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम् । न चेयं तथा । तस्मान्न तथेति । अत्र 'यद्गन्धवत्तदितरेभ्योऽपि भिन्नम्' इत्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् ॥**

( न्यायबो० ) अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् ॥ यथा पृथिवीति ॥ अत्र " पृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलाद्यष्टभेदः साध्यः,गन्धवत्त्वं हेतुः।अत्र'यद्गन्धवत् तदितरभेदवत् इत्यन्वयदृष्टान्ताभावात् गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासंभवात् । किन्तु ' यत्र यत्रेतरभेदाभावस्तत्र तत्र गन्धाभावः यथा जलादिकम्' इति व्यतिरेकदृष्टान्तभूतजलादावितरभेदाभावरूपसाध्याभाव[1]व्यापकता गन्धाभावे दृश्यते । इदमेवार्थं मनसि निधाय ' यन्नेतरेभ्यो भिद्यते न तद्गन्धवत् यथा जलम्' इति ग्रन्थेन मूलकृ[2]द्व्यतिरेकव्याप्तिमेव प्रदर्शितवान् ॥ एवं व्यतिरेकव्याप्तिग्रहानन्तरम् ' इतरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवी' इत्याकारकव्यतिरेकिपरामर्शात् ' पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका पृथिवी इतरभेदवती' इत्याकारानुमितिर्जायते " इति तत्त्वम् ॥ यथाश्रुतमूलार्थस्तु—यथा जलमिति ॥ जलमितरभेदाभाववत् = ' इतरभेदाभावव्यापकगन्धाभाववच्च' इत्येवं प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यते' इत्यर्थः ॥ नचेयं तथेति । ई[3]यं पृथ्वी, तथा इतरभेदाभावव्यापकगन्धाभाववती न, किंतु त[4]दभावगन्धवती, इत्यर्थः ॥

---

१ अभावपदं कुत्रचिन्न. २ मूलकारो. ३ इयं पृथ्वी. तथा नाम । इति कुत्रनास्ति ४ तदभाववती नाम गन्धव.

तस्मान्न तथेति॥ तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन 'तस्मात्' इति पञ्चम्यन्तात् 'गन्धाभावाभाववत्त्वात्' इत्यर्थोपलब्धेः, तथा इतरभेदाभाववती । 'न' इत्यस्याभावः, तथा च 'इतरभेदाभावाभाववती =इतरभेदवती' इत्यर्थः ॥

( पदकृ० ) केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति ॥ व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्तथा ॥ अन्वयव्यतिरेकिणि अतिव्याप्तिवारणाय मात्रपदम्' नचेयं तथेति ॥ 'इयं पृथिवी न तथा न गन्धाभाववती' इत्यर्थः ॥ तस्मान्न तथेति ॥ 'गन्धाभाववत्त्वाभावादितरभेदाभाववती न, इत्यर्थः ॥ ननु 'अत्र किमिति नान्वयव्याप्तिः' इत्याशङ्क्य परिहरति—अत्रेति ॥ 'इतरभेदसाधकानुमाने' इत्यर्थः इदमुपलक्षणम्—"जीववच्छरीरं सात्मकं, प्राणादिमत्त्वात् यन्नैवं तन्नैवं यथा घटः" "प्रत्यक्षादिकं 'प्रमाणम्' इति व्यवहर्तव्यम्,प्रमाकरणत्वात् यन्नैवं तन्नैवं यदि प्रत्यक्षभावः" "विवादास्पदम् आकाशम् इति व्यवहर्तव्यम्, शब्दवत्त्वात्" इत्यादिकमपि केवलव्यतिरेकि इति द्रष्टव्यम् ।

**संदिग्धसाध्यवान् पक्षः । यथा—धूमवत्त्वे हेतौ पर्वतः॥**

( न्यायबो० ) संदिग्धसाध्येति ॥ साध्यप्रकारकसंदेहविशेष्यत्वं पक्षत्वम् ॥ एतच्च 'अनुमितेः पूर्वं साध्यसंदेहो नियमेन जायते' इत्यभिप्रायेण लक्षणं प्राचीनैः कृतम् ॥ गगनविशेष्यकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन 'गगनं मेघवत्' इत्याकारानुमितिर्जायते गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकानुमितिदर्शनात् प्राचीनमतं विहाय नवीनैः "अनुमित्युद्देश्यत्वं पक्षत्वम्" इति स्थिरीकृतम् ॥

( पदकृ० ) अथ 'पृथिवीमात्रस्य पक्षत्वात्' इत्यत्र किं नाम पक्षता, तां निर्वक्ति—संदिग्धेति ॥ सपक्षवारणाय संदिग्धेति ॥

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम्॥**

---

१ गन्धाभावाभावान्नाम गन्धवत्त्वात् २इत्यर्थो लभ्यः ३ मात्रेति४मेघप्रकारके-त्यधिकम्

( न्यायबो० ) निश्चितसाध्येति ॥ साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् ॥ निश्चयश्च, महानसं वन्हिवत् , इत्याकारकः ॥

( पदकृ० ) निश्चितेति ॥ पक्षे अतिव्याप्तिवारणाय निश्चितेति । तत्रेति 'धूमवत्त्वे हेतौ' इत्यर्थः ॥

**निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव ह्रदः ॥**

( न्यायबो० ) निश्चितसाध्याभावेति ॥ साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् ॥ निश्चयश्च 'ह्रदो वन्ह्यभाववान्, इत्याकारकः

( पदकृ० ) निश्चितेति ॥ सपक्षे अतिव्याप्तिवारणाय 'साध्याभाव' इति ॥ पक्षे अतिव्याप्तिवारणाय 'निश्चित' इति । तत्रैवेति धूमवत्त्व एव ॥

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः ॥**

( न्यायबो० ) एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति—सव्यभिचारेति ॥ हेतुवदाभासन्त इति हेत्वाभासा दुष्टहेतवः, इत्यर्थः । दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधाः । एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः ॥ हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा भवति ॥ अतो वादिनिग्रहार्थं वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः ॥ 'पर्वतो वन्हिमान् प्रमेयत्वात्' इत्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वन्ह्यभाववद्वृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धः फलम् ॥

( पदकृ० ) हेतून्निरूप्य प्रसङ्गाद्धेत्वाभासानाह—सव्यभिचारेति ॥ अत्रेदं बोध्यम् । "अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं स्वसाध्यं साधयितुं क्षमते । 'तानि कानि' इति चेत् श्रूयताम्—पक्षधर्मत्वम्, सपक्षसत्त्वम्, विपक्षव्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति । अबाधितः साध्यरूपविषयो यस्य तत्तथोक्तम् , तस्य भावस्तत्त्वम् , एवं साध्याभावसाधकं हेत्वन्तरं यस्य स 'सत्प्रतिपक्ष'इत्युच्यते,स नास्ति यस्य सः असत्प्रतिपक्षः, 'तस्य भावस्तत्त्वम्' ( इति बोध्यम् ) केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साध-

---

१ जायते २ ज्ञायताम्

यितुं क्षमते । तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात् ॥ केवलव्यतिरेक्यपि तथा तस्य सपक्षविपर्ययेण तत्सत्त्वविपर्ययात् " इति ॥ उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वात् 'हेतुवदाभासन्ते' इति हेत्वाभासाः । तत्त्वं च अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् ॥ बाधस्थले 'वन्हिरनुष्ण-' इत्यनुमितिप्रतिबन्धकं यज्ज्ञानम् 'उष्णत्ववद्वह्नावनुष्णत्वसाधकं द्रव्यत्वम्' इत्याकारकम्, तद्विषयत्वस्य विषयितासंबन्धेन द्रव्यत्वरूपहेत्वाभासे सत्त्वाल्लक्षणसमन्वयः ॥ सद्धेतुवारणाय 'यथार्थ' इति घटादिवारणाय 'अनुमितितत्करणप्रतिबन्धक' इति । व्यभिचारिण्यतिव्याप्तिवारणाय 'अनुमितितत्करणान्यतर' इति ॥

**सव्यभिचारोऽनैकान्तिकः । स त्रिविधः—साधारणासाधारणानुपसंहारिभेदात् ॥ तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इति । प्रमेयत्वस्य वन्ह्यभाववति ह्रदे विद्यमानत्वात् ॥**

(पदकृ०) तत्रेति ॥ 'साधारणादित्रयमध्ये' इत्यर्थः अथ 'विरुद्धेऽतिप्रसक्तिः' इति मा स्म दृप्यः । सपक्षवृत्तित्वस्यापि निवेशात् ॥ अयमपि स्वरूपासिद्धे दूषणं जागर्ति, इति मा वह गर्वम् पक्षवृत्तित्वस्यापि तथात्वात् ।

**सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा 'शब्दो नित्यः शब्दत्वात्' इति । शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्ति ॥**

(न्यायबो०) असाधारण इति ॥ सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवदवृत्तित्वम् । साध्यवदवृत्तित्वं च साध्यासामानाधिकरण्यम् ॥ हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

(पदकृ०) पक्षमात्रेति ॥ सर्वे ये सपक्षा विपक्षास्तेभ्यो व्यावर्तत इति व्यावृत्तः ॥ केवलव्यतिरेकिवारणाय 'तद्भिन्नः' इत्यपि देयम् ॥

---

१ सपक्षविपक्ष- २ निश्चितसाध्यसाध्याभाववद्-

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा-'सर्वमनित्यं प्रमेयत्वात्' इति । अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति॥**

( न्यायबो० ) अनुपसंहारिणं लक्षयति—अन्वयेति ॥ उभयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः पक्षातिरिक्ताप्रसिद्धेरित्यर्थः ॥

( पदकृ० ) अन्वयेति ॥ केवलान्वयिन्यतिव्याप्तिवारणाय 'अन्वय' इति। केवलव्यतिरेकिण्यतिव्याप्तिवारणाय 'व्यतिरेक' इति ॥ अत्रेति ॥ 'उपदर्शितानुमाने' इत्यर्थः ॥

**साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा 'शब्दो नित्यः कृतकत्वात्' इति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥**

( न्यायबो० ) विरुद्धं लक्षयति—साध्याभावव्याप्त इति ॥ तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् ॥ एवं सत्प्रतिपक्षेऽपि ॥ विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु—विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः । 'सत्प्रतिपक्षे द्वौ हेतू, विरुद्ध एको हेतुः' इति यावत् ॥ 'साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्तः,इत्यसामर्थ्यसूचनमपि भवति ॥

( पदकृ० ) विरुद्धं लक्षयति—साध्येति ॥ सद्धेतुवारणाय 'साध्याभावव्याप्तः' इति । सत्प्रतिपक्षवारणाय 'सत्प्रतिपक्षाभिन्नः इत्यपि ज्ञेयम् ॥ कृतेति ॥ कार्यत्वादित्यर्थः ॥ कृतकत्वमिति ॥ अनित्यत्वेन । व्याप्तमिति ॥ 'यद्यत्कृतकं तत्तदनित्यम्' इति व्याप्तेर्भवत्येव तथेति भावः ॥

**साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः । यथा 'शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् , शब्दो नित्यः कार्यत्वात् घटवत्' ॥**

---

१सर्वस्यैव पक्षत्वात्पक्षाति- २ भेदः। इतोऽग्रेतन पाठः कुत्रचिन्नास्ति। ३बोध्यम्।

( पदकृ० ) सत्प्रतिपक्षं लक्षयति—साध्येति ॥ 'यस्य हेतोः साध्याभावसाधकं साध्याभावस्यानुमापकं हेत्वन्तरं प्रतिपक्षो हेतुर्विद्यते, स हेतुः सत्प्रतिपक्षः' इत्यर्थः ॥ अयमेव 'प्रकरणसमः' इत्युच्यते ॥ विरुद्धवारणाय 'हेत्वन्तरं यस्य' इति ॥ वन्ह्यादिवारणाय 'साध्याभाव-' इति ॥

**असिद्धस्त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति ॥**

( पदकृ० ) असिद्धं विभजते—असिद्ध इति ॥ आश्रयासिद्धाद्यन्यतमत्वमसिद्धम् ॥

**आश्रयासिद्धो यथा—गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः, सच नास्त्येव ॥**

( न्यायबो० ) आश्रयासिद्ध इति ॥ ( आश्रयासिद्धिर्नाम ) पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिः । यथा ( तथाच ) –गगनीयत्वविशिष्टपक्षासिद्धेः सौरभ्यानुमितिर्न भवति ॥

( पदकृ० ) आश्रयासिद्धत्वं च पक्षतावच्छेदकाभाववत्पक्षकत्वम् ॥ भवति हि अरविन्दे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्त्वम्, अरविन्दरूपपक्षे गगनीयत्वविरहात् ॥ ननु कथमरविन्दे गगनीयत्वविरहोऽत आह—अत्रेति ॥ उपदर्शितानुमान इत्यर्थः ॥

**स्वरूपासिद्धो यथा-शब्दो गुणः, चाक्षुषत्वात् रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ॥**

( न्यायबो० ) स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः । तथा च हेत्वभावविशिष्टपक्षज्ञानात् पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम् ॥

( पदकृ० ) पक्षे हेत्वभावः स्वरूपासिद्धिः ॥ सद्धेत्वभावे ऽतिव्याप्तिवारणाय 'पक्षे' इति । घटाद्यभाववारणाय 'हेतु' इति ॥ "सो ऽयं स्वरूपासिद्धः

शुद्धासिद्ध—भागासिद्ध—विशेषणासिद्ध—विशेष्यासिद्ध—भेदेन चतुर्विधः॥ तत्राद्यस्तूपदर्शित एव॥ द्वितीयो यथा—'उद्भूतरूपादिचतुष्टयं गुणः रूपत्वात्' इत्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन भागे स्वरूपासिद्धत्वम् ॥ तृतीयो यथा—'वायुः प्रत्यक्षः रूपत्वे सति स्पर्शवत्त्वात्' इत्यत्र रूपवत्त्वविशेषणस्य वायाववृत्तेस्तद्विशिष्टस्पर्शवत्त्वस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति, विशेषणाभावे विशिष्टस्याप्यभावात् ॥ तुरीयो यथा—अत्रैव विशेषणविशेष्यवैपरीत्येन हेतुः, तस्य स्वरूपासिद्धत्वं विशेष्याभावप्रयुक्तविशिष्टाभावात्' इति बोध्यम् ॥

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः॥साध्यव्यापकत्वे सति साधनाव्यापकत्वम् उपाधिः ॥ साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्॥साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्॥पर्वतो धूमवान् वह्निमत्त्वात्' इत्यत्र 'आर्द्रेन्धनसंयोग उपाधिः। 'यत्र धूमः,तत्रार्द्रेन्धनसंयोगः' इति साध्यव्यापकता। 'यत्र वह्निः' तत्रार्द्रेन्धनसंयोगो नास्ति, अयोगोलक आर्द्रेन्धनाभावात्' इति साधनाव्यापकता। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ॥**

(न्यायबो०) व्याप्यत्वासिद्धमिति ॥ प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत्, धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम् । एवं वह्निव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत्; वन्हौ तदव्याप्यत्वं गृहीतम्, तदेव व्यभिचारित्वं ॥ तथा चोपाधिव्यभिचारित्वं साधने गृहीतं चेत् उपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव ॥ अनुमानप-

---

१ बहुविधः । २ संयोगस्य ।

कारश्च पूर्वानुमानहेतुं पक्षीकृत्य ' वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धन-संयोगव्यभिचारित्वात् घटत्वादिवत्, । यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारी । एवं प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः । तथा च धूमाभाववद्वृत्ति-त्वरूपधूमव्यभिचारे गृहीते वन्हौ धूमाभाववदवृत्तित्वरूपव्याप्तिग्रहप्रति-बन्धः फलम् ॥

( पदकृ० ) व्याप्यत्वासिद्धं लक्षयति—'सोपाधिकः' इति ॥ ननु 'कोयमुपाधिः, इत्यत आह—साध्येति ॥ 'साधनाव्यापकत्वमुपाधिः' इत्युक्ते 'शब्दो नित्यः कृतत्वात् ' इत्यत्र 'सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वम्' उपाधिः स्यात्, तदर्थं साध्यव्यापकत्वमुक्तम् ॥ तावत्युक्ते सामान्यवत्त्वादिना ऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात्, तदर्थं साधनाव्यापकत्वमुक्तम् ॥ उपाधिभेदमादायासंभववारणाय व्यापकत्वशरीरेऽप्यत्यन्तपदमादेयम् ॥ साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकशरीरेऽप्यत्यन्तपदमावश्यकं देयम् ॥ "सोऽयमुपाधिस्त्रिविधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति ॥ तत्राद्य उपदर्शितः ॥ एवं 'क्रत्वन्तर्वर्तिनी हिंसा ऽधर्मजनिका हिंसात्वात् क्रतुबाह्यहिंसावत्' इत्यत्र निषिद्धत्वमुपाधिः । तस्य 'यत्राधर्मजनकत्वम्, तत्र निषिद्धत्वम्' इति साध्यव्यापकता । 'यत्र हिंसात्वम्, तत्र न निषिद्धत्वम्' इति निषिद्धत्वमुपाधिः साधनाव्यापकः, क्रतुहिंसायां निषिद्धत्वस्याभावात् । "न हिंस्यात्सर्वा भूतानि" इति सामान्यवाक्यतः "पशुना यजेत" इत्यादिविशेषवाक्यस्य बलीयस्त्वात् । अतो हिंसात्वं नाधर्मजनकत्वे प्रयोजकम्, अपितु 'निषिद्धत्वमेव' इत्यादिकमपि द्रष्टव्यम् ॥ द्वितीयो यथा—'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्रोद्भूतरूपवत्त्वम् उपाधिः । तस्य 'यत्र प्रत्यक्षत्वम्, तत्रोद्भूतरूपवत्त्वम्, इति न केवलसाध्यव्यापकत्वं रूपे व्यभिचारात् किंतु 'द्रव्यलक्षणो यः पक्षधर्मस्तदवच्छिन्नबहिःप्रत्यक्षत्वं यत्र, तत्रोद्भूतरूपवत्त्वम्' इति

---

१ इदं कुत्रचिन्नास्ति । २ अत्रायमधिक पाठः 'यथा घटत्वव्यापकपृथिवीत्वव्यभिचारिद्रव्यत्वं घटत्वव्यभिचारि' इति । ३ फलमित्यधिकम् ।

पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव । आत्मनि व्यभिचारवारणाय बहिःपदम् । 'यत्र प्रत्यक्षस्पर्शाश्रयत्वम्' तत्र नोद्भूतरूपवत्त्वम्' इति साधनाव्यापकत्वं च । वायावुद्भूतरूपविरहात् ॥ तृतीयो यथा—'प्रागभावो विनाशी जन्यत्वात्' इत्यत्र भावत्वम् उपाधिः । तस्य 'यत्र विनाशित्वम्, तत्र भावत्वम्' इति न केवलसाध्यव्यापकत्वम्, प्रागभावे भावत्वविरहात् । किंतु 'जन्यत्वरूपसाधनावच्छिन्नविनाशित्वं यत्र, तत्र भावत्वम्' इति साधनावच्छिन्नसाध्यव्यापकत्वमेवास्ति । 'यत्र जन्यत्वम्, तत्र भावत्वम्' इति साधनाव्यापकत्वं च, ध्वंसे भावत्वविरहात् ॥ एवं 'स श्यामो मित्रातनयत्वात्' इत्यत्र शाकपाकजन्यत्वमुपाधिः । श्यामत्वस्य नीलघटेऽपि सत्त्वात् न केवलसाध्यव्यापकत्वम् । किंतु साधनावच्छिन्नसाध्यव्यापकत्वमेव । अष्टमे पुत्रे शाकपाकजन्यत्वविरहेण साधनाव्यापकत्वं च" इत्यादिकं द्रष्टव्यम् ॥

**यस्य साध्याभावः प्रमाणेन[1] निश्चितः स बाधितः । यथा 'वह्निरनुष्णो द्रव्यत्वात्' इत्यत्रानुष्णत्वं साध्यम्, तदभावउष्णत्वं स्पर्शेन प्रत्यक्षेण गृह्यते इति बाधितत्वम् ॥**

## व्याख्यातमनुमानम्

( न्यायबो० ) यस्येति ॥ यस्य हेतोः । साध्यस्याभावः साध्याभावः स च प्रमाणेन प्रत्यक्षप्रमाणेन निश्चितः ॥ तथा च प्रात्यक्षिकसाध्याभावनिश्चयेनानुमितिप्रतिबन्धः फलम्॥ बाधितसाध्यकत्वाद्बाधितो[3] हेतुरुच्यते॥

( पदकृ० ) यस्येति ॥ सद्धेतुवारणाय 'प्रमाणान्तरेण' इति । घटादिवारणाय 'साध्य' इति ॥

इत्यनुमाननिरूपणम् ॥

**उपमितिकरणमुपमानम् ॥ संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथाहि—कश्चिद्गवयपदार्थमजान-**

---

१ प्रमाणान्तरेण । २ प्रमाणान्तरेण निर्णीतः । ३ इदं कुत्रचिन्नास्ति ।

न् कुतश्चिदारण्यकपुरुषाद् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति तदनन्तरं 'गवयशब्दवाच्यो ऽयम्' इत्युपमितिरुत्पद्यते ॥

(न्यायबो०) उपमानं लक्षयति—उपमितीति ॥ उपमितिं लक्षयति—संज्ञासंज्ञीति ॥ संज्ञा[1] पदम्, संज्ञ्यर्थः[2], तयोः संबन्धः शक्तिः । तथा च 'पदपदार्थसंबन्धज्ञानमुपमितिः' इत्यर्थः । उपमानमतिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । 'गोसदृशो गवयपदवाच्यः' इत्याकारकात्[3] गोसदृशत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानं जायते, तदेव करणम् ॥

(पदकृ०) अवसरसंगतिमभिप्रेत्यानुमानानन्तरम् उपमानं निरूपयति—उपमितीति ॥ उपमितेः करणमुपमानमित्यर्थः ॥ कुठारादिवारणाय 'मिति' इति ॥ प्रत्यक्षादिवारणाय 'उप' इति ॥ संज्ञासंज्ञीति ॥ अनुमित्यादिवारणाय 'संबन्ध' इति । संयोगादिवारणाय 'संज्ञासंज्ञि' इति ॥ 'अयं गवयवाच्यः' इति । 'अभिप्रेतगवयो गवयपदवाच्यः' इत्यर्थः ॥ तेन 'गवयान्तरे शक्तिग्रहाभावप्रसङ्गः' इति दूषणमपास्तम् ॥ तथा च गोसादृश्यविशिष्टपिण्डज्ञानं करणम् । अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः । उपमितिः फलम्, इति सारम् ॥ तच्चोपमानं त्रिविधम्—सादृश्यविशिष्टपिण्डज्ञानम्, असाधारणधर्मविशिष्टपिण्डज्ञानम्, वैधर्म्यविशिष्टपिण्डज्ञानं च ॥ तत्राद्यमुक्तमेव ॥ द्वितीयं यथा– 'खड्गी मृगः कीदृक्' इति पृष्टे 'नासिकालसदेकशृङ्गोऽनतिक्रान्तगजाकृतिश्च' इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशपिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति, तदनंतरं 'खड्गमृगः खड्गपदवाच्यः' इत्युपमितिरुत्पद्यते', अत्र 'नासिकालसदेकशृङ्गः' इत्यसाधारणधर्मः ॥ तृतीयं यथा—उष्ट्रः कीदृक्' इति पृष्टे 'अश्वादिवदसमानपृष्ठो न ह्रस्वग्रीवशरीरश्च' इति आप्तोत्तरिते कालान्तरेण तत्पिण्डदर्शनाद्वैधर्म्यविशिष्टपि-

१ संज्ञा नाम । २ संज्ञीपदार्थः । ३ इत्याकारकवाक्यात् ।

ण्डज्ञानम्, ततो ऽतिदेशवाक्यार्थस्मरणम्, ततः 'उष्ट्र उष्ट्रपदवाच्यः' इत्युपमितिरुत्पद्यते॥

इत्युपमाननिरूपणम् ॥

**आप्तवाक्यं शब्दः ॥ आप्तस्तु यथार्थवक्ता ॥ वाक्यं पदसमूहः । यथा—'गामानय' इति ॥ शक्तं पदम् ॥ 'अस्मात्पदादयमर्थो बोद्धव्यः' इतीश्वरसंकेतः शक्तिः ॥**

(न्यायबो०) शब्दं लक्षयति—आप्तेति ॥ पदज्ञानं कारणम् । वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः। वाक्यार्थज्ञानं फलम्, तच्छाब्दबोधः ॥ वृत्तिर्नाम शक्तिलक्षणान्यतररूपा ॥ शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः ॥ ईश्वरसंकेतो नामेश्वरेच्छा । सैव शक्तिरित्यर्थः ॥ शक्तिनिरूपकत्वमेव पदे शक्तत्वम्॥ विषयतासंबन्धेन शक्त्याश्रयत्वं शक्यत्वम् ॥ शक्यसंबन्धो लक्षणा ॥ सा द्विधा—गौणी शुद्धा चेति ॥ गौणी नाम सादृश्यविशिष्टलक्षणा॥ यथा—'सिंहो माणवकः' इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा॥शुद्धाऽपि द्विविधा—जहल्लक्षणा अजहल्लक्षणा चेति ॥ लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका जहल्लक्षणा ॥ यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदवाच्यप्रवाहसंबन्धस्य तीरे सत्त्वात्तादृशशक्यसंबन्धरूपलक्षणाज्ञाना[1]त् गङ्गापदात्तीरोपस्थितिः ॥ लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजका[2] अजहल्लक्षणा ॥ यथा—'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदस्य दध्युपघातके लक्षणा ॥ लक्ष्यतावच्छेदकत्वं दध्युपघातकत्वे तेन रूपेण दध्युपघातकानां काकबिडालकुक्कुरा[3]दीनां शक्यलक्ष्याणां सर्वेषां बोधात् ॥ जहदजहल्लक्षणा वेदान्तिमते ॥

(पदकृ०) अवसरसंगतिमभिप्रेत्योपमानानन्तरं शब्दं लक्षयति[4]—आप्तेति ॥ शब्द इति ॥ शब्दप्रमाणमित्यर्थः ॥ भ्रान्तविप्रलम्भकयोर्वाक्यस्य शा-

१ तत्त्वात् । २प्रयोजकलक्षणा अज ।३ कुक्कुटसारमेयादीनाम् । ४ दर्शयति । निरूपयति ।

ब्दप्रमाणत्ववारणाय ' आप्त ' इति ॥ ननु ' कोऽयमाप्तः ' इत्यत आह- आप्तस्त्विति ॥ यथार्थवक्ता यथाभूताबाधितार्थोपदेष्टा ॥ वाक्यं लक्षयति- वाक्यमिति । घटादिसमूहवारणाय ' पद ' इति । शक्तमिति ॥ ' निरूपक तासंबन्धेन शक्तिविशिष्टम् ' इत्यर्थः ॥ अस्मादिति ॥ 'घटपदाद्घटरूपोऽर्थो बोद्धव्यः' इतीश्वरेच्छैव शक्तिः' इत्यर्थः ॥ अर्थस्मृत्यनुकूलपदपदार्थसंबन्ध- त्वं तल्लक्षणम् ॥ शक्तिरिव लक्षणाऽपि पदवृत्तिः ॥ अथ केयं लक्षणा—शक्य- संबन्धो लक्षणा ॥ सा च त्रिधा—जहदजहज्जहदजहद्भेदात् ॥ वर्तते च ' गङ्गा- यां घोषः' इत्यत्र गङ्गापदशक्यप्रवाहसंबन्धस्तीरे ॥ लक्षणाबीजं च तात्प- र्यानुपपत्तिः ॥ अत एव प्रवाहे घोषतात्पर्यानुपपत्तेस्तीरे लक्षणा सेत्स्यति ॥ ' छत्रिणो यान्ति ' इत्यादौ द्वितीया ॥ ' सोऽयमश्वः ' इत्यादौ तृतीया ॥

**आकाङ्क्षा योग्यता संनिधिश्च वाक्यार्थज्ञाने हेतुः ॥ पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा॥ अर्था- बाधो योग्यता ॥ पदानामविलम्बेनोच्चारणं संनिधिः ॥ तथा चाकाङ्क्षादिरहितं वाक्यमप्रमाणम् । यथा—'गौरश्वः पुरु- षो हस्ती, इति न प्रमाणम् ,आकाङ्क्षाविरहात् । ' वह्नि- ना सिञ्चेत्, इति न प्रमाणम्, योग्यताविरहात् । प्रहरे प्रहरे ऽसहोच्चारितानि 'गाम्, आनय ' इत्यादिपदानि न प्रमाणम्, सांनिध्याभावात् ॥**

( न्यायबो० ) आकाङ्क्षां लक्षयति—पदस्येति ॥ यत्पदविशेष्यका- व्यवहितोत्तरत्वादिसंबन्धेन यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशा- ब्दबोधाभावः, तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वम् आकाङ्क्षा । तादृशा- काङ्क्षाज्ञानं शाब्दबोधे कारणम् ॥ अर्थाबाध इति ॥ 'बाधाभावो योग्य- ता' इत्यर्थः ॥ 'अग्निना सिञ्चेत् इत्यत्र सेककरणत्वस्य जलादिधर्मस्य वन्हौ बाधनिश्चयसत्त्वात्तादृशवाक्याच्छाब्दबोधो न संभवति ॥ आसत्तिं निरूपयति—पदानामिति ॥ असहोच्चारितानि ॥ विलम्बेनोच्चारितानि ॥

---

१ पदस्य वृत्तिः । २ यत्पदविशेष्यकेति कुत्रचिन्नास्ति । ३ यस्य यत्पद ।

– ( पदकृ० ) पदस्येति ॥ असंभववारणाय 'पदान्तरव्यतिरेकप्रयुक्त' इ-ति । पुनरसंभववारणाय 'पदान्तर' इति ॥ अर्थेति ॥आकाङ्क्षावारणाय 'अर्थ' इति ॥ पदानामिति ॥ असहोच्चारितेष्वतिव्याप्तिवारणाय 'अविलम्बेन' इति । आकाङ्क्षावारणाय 'पदानाम्' इति ॥ आकाङ्क्षादिशून्यस्य वाक्य-स्यात्र प्रमाणत्वं निषेधयति—तथा चेति ॥ 'आकाङ्क्षादिकं शाब्दहेतुः' इत्युक्ते चेत्यर्थः ॥ अनाकाङ्क्षाद्युदाहरणं दर्शयति—यथेति ॥

**वाक्यं द्विधा—वैदिकं लौकिकं चेति ॥ वैदिकमीश्वरोक्तत्वा-त् सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम् । अन्य-दप्रमाणम् ॥**

( न्यायबो० ) वैदिकम् 'वेदवाक्यम्' इत्यर्थः ॥ इदमुपलक्षणम्—वे-दमूलकस्मृत्यादीन्यपि ग्राह्याणि ॥ लौकिकं त्विति ॥ आप्तत्वं च प्रयोग-हेतुभूतयथार्थज्ञानवत्त्वम् ॥

**वाक्यार्थज्ञानं शब्दज्ञानम् । तत्करणं शब्दः ॥**

( पदकृ० ) 'नन्वेतावता शाब्दसामग्री प्रपञ्चिता, प्रमाविभाजकवाक्ये शाब्दस्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितम्' इत्यत आह—वाक्यार्थेति ॥ शाब्दत्वं च 'शब्दात्प्रत्येमि' इत्यनुभवसिद्धा जातिः ॥ शाब्दबोधक्रमो यथा—'चैत्रो ग्रामं गच्छति' इत्यत्र 'ग्रामकर्मकगमनानुकूलवर्तमानकृतिमा-न्' इति शाब्दबोधः ॥ द्वितीयायाः कर्मत्वमर्थः, धातोर्गमनम्, अनुकूलत्वं च संसर्गमर्यादया भासते, लटो वर्तमानत्वम्, आख्यातस्य कृतिः, तत्संबन्धः संसर्गमर्यादया भासते ॥ 'रथो गच्छति' इत्यत्र 'गमनानुकूलव्यापारवान् रथः' इति शाब्दबोधः ॥ 'स्नात्वा गच्छति' इत्यत्र गमनप्रागभावावच्छिन्नकाली-नस्नानकर्ता गमनानुकूलवर्तमानकृतिमान्' इति शाब्दबोधः ॥ क्त्वाप्रत्ययस्य कर्ता पूर्वकालीनत्वं चार्थः॥ एवमन्यत्रापि वाक्ये बोध्यम् ॥

इति शब्दनिरूपणम् ॥

---

१ अन्यवाक्यस्येति ।

अयथार्थानुभवस्त्रिधा—संशयविपर्ययतर्कभेदात् ॥ एकस्मि-न्धर्मिणि विरुद्धनानाधर्मवैशिष्टज्ञानं संशयः । यथा—'स्थाणुर्वा पुरुषो वा ' इति ॥

( न्यायबो० ) यथार्थानुभवं निरूप्यायथार्थानुभवं विभजति—संशय इत्यादिना ॥ एकेति ॥ 'एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकं ज्ञानं संशयः' ॥भावद्वयकोटिकसंशयाप्रसिद्धेः 'स्थाणुर्वा' इत्यत्र स्थाणुत्वस्थाणुत्वाभाव–पुरुषत्वपुरुषत्वाभाव(एक)कोटिक एव ॥

( पदकृ० ) अयथार्थानुभवं विभजते—अयथार्थेति । संशयं लक्षयति—एकेति ॥ 'एकस्मिन्धर्मिण्येकस्मिन्पुरोवर्तिनि पदार्थे विरुद्धा व्यधिकरणा नानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वैशिष्ट्यं संबन्धः, तदवगाहि ज्ञानं संशयः' इत्यर्थः ॥ 'घटपटौ' इति समूहालम्बनज्ञानस्य घटत्वपटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसक्तिवारणाय 'एकस्मिन्निति' ॥ 'घटः पृथिवी' इति ज्ञानस्यैकस्मिन्धर्मिणि घटे घटत्वपृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसङ्गवारणाय 'विरुद्ध' इति ॥ 'घटत्वविरुद्धपटत्ववान्पटः' इति ज्ञानेऽतिप्रसक्तिवारणाय 'नाना' इति ॥

मिथ्याज्ञानं विपर्ययः ॥ यथा शुक्तौ 'रजतम्' इति ॥

( न्यायबो० ) मिथ्याज्ञानमिति ॥ 'अयथार्थज्ञानम्' इत्यर्थः ॥ विपर्ययो नाम भ्रमः, इत्यर्थः ॥

( पदकृ० ) मिथ्येति ॥ यथार्थज्ञानवारणाय 'मिथ्या' इति । अयथार्थवारणाय 'ज्ञान' इति ॥

व्याप्यारोपेण व्यापकारोपस्तर्कः ॥ यथा—'यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इति ॥

( न्यायबो० ) व्याप्यारोपेणेति ॥ तर्के व्याप्यस्य व्यापकस्य च व्यतिरेकविधनिश्चयः कारणम् । अन्यथा बाधनिश्चयाभावे इष्टापत्तिदोषेण तर्कानुत्पत्तेः ॥

( पदकृ० ) व्याप्येति ॥ असंभववारणाय 'व्याप्यारोपेण' इति । पुनरसंभववारणाय 'व्यापकारोपः' इति ॥ अत्र वह्न्यभावो व्याप्यः, धूमाभावो व्यापकः । यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः । तथापि प्रमाणानुग्राहकत्वात् स उदितः, इति बोद्धव्यम् ॥ स्वप्नस्तु पुरीतद्बहिर्देशान्तर्देशयोः संधौ सिधोनाड्यां वा मनसि स्थिते, अदृष्टविशेषेण धातुदोषेण वा जन्यते । स च मानसविपर्ययान्तर्भूतः ॥

**स्मृतिरपि द्विधा—यथार्था, अयथार्था च ॥ प्रमाजन्या यथार्था । अप्रमाजन्या ऽयथार्था ॥ सर्वेषामनुकूलवेदनीयं सुखम् ॥**

( न्यायबो० ) सुखं निरूपयति—अनुकूलेति ॥ 'इतरेच्छानधीनेच्छाविषयत्वम्' इति निष्कर्षः ॥ यथाश्रुते—अनुकूलत्वप्रकारकवेदनीयत्वस्य ( वेदनाविशेष्यत्वस्य ) 'घटो ऽनुकूलः 'इत्याकारकज्ञानदशायामनुकूलप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिः'—इति निष्कृष्टलक्षणमुक्तम् ॥ भोजनादावतिव्याप्तिवारणाय 'इतरेच्छानधीन' इतीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥

( पदकृ० ) सुखं निरूपयति—सर्वेषामिति ॥ 'सर्वात्मनाम्, अनुकूलः' इति वेद्यं यत् 'तत्सुखम्' इत्यर्थः ॥ 'अहं सुखी' इत्यनुभवसिद्धसुखत्वजातिमद् धर्ममात्रासाधारणकारणगुणो वा सुखम् ॥ शत्रुदुःखवारणाय 'सर्वेषाम्' इति ॥

**प्रतिकूलतया वेदनीयं दुःखम् ।**

---

१ कारणमित्यारभ्य तर्कानुत्पत्तेरित्यन्तः पाठः कुत्रचिन्न । २ विपर्ययत्वेन । ३ सर्वेषां जनानाम् । ४ सुखदुःखवा–

( न्यायबो० ) दुःखं निरूपयति—प्रतिकूलेति ॥ अत्रापि "इतरद्वेषानधीनद्वेषविषयत्वम्" इति निष्कृष्टलक्षणम् ॥ द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिः, तद्वारणाय 'इतरद्वेषाधीन-' इति द्वेषविशेषणम् ॥ सर्पजन्यदुःखादौ द्वेषात् सर्पेऽपि द्वेषः, इति सर्पस्य सर्पजन्यदुःखजन्यद्वेषविषयत्वात् । अन्यद्वेषानधीनद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः ॥ फलेच्छा उपायेच्छां प्रति कारणम् । अतः फलेच्छावशादुपायेच्छा भवति ॥ एवं फले द्वेषादुपाये द्वेषः ॥

( पदकृ० ) प्रातिकूलेति ॥ दुःखत्वजातिमद् अधर्ममात्रासाधारणकारणगुणो (वा) दुःखम् ॥ पदकृत्यं पूर्ववत् ॥

**इच्छा कामः ॥ क्रोधो द्वेषः ॥ कृतिः प्रयत्नः ॥**

( पदकृ० ) इच्छां निरूपयति—इच्छेति ॥ 'कामः' इति पर्यायः ॥ इच्छात्वजातिमती—इच्छा ॥ सा द्विधा—फलेच्छा, उपायेच्छा च ॥ फलम् सुखादिकम् । उपायो यागादिः ॥ द्वेषं निरूपयति—क्रोध इति ॥ 'द्वेष्मि' इत्यनुभवसिद्धद्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः ॥ प्रयत्नं निरूपयति—कृतिरिति ॥ प्रयत्नत्वजातिमान् प्रयत्नः ॥ स त्रिविधः—प्रवृत्ति-निवृत्तिजीवनयोनिभेदात् ॥ इच्छाजन्यो गुणः प्रवृत्तिः ॥ द्वेषजन्यो गुणो निवृत्तिः ॥ जीवनादृष्टजन्यो गुणो जीवनयोनिः ॥ स च प्राणसंचारकारणम् ॥

**विहितकर्मजन्यो धर्मः ॥ निषिद्धकर्मजन्योऽधर्मः ॥**

( न्यायबो० ) धर्माधर्मौ निरूपयति—विहितेति ॥ 'वेदविहित' इत्यर्थः ॥ निषिद्धेति ॥ 'वेदनिषिद्ध' इत्यर्थः ॥

( पदकृ० ) धर्ममाह—विहितेति ॥ 'वेदविहित-' इत्यर्थः ॥ अधर्मवारणाय 'वेदविहित-' इति ॥ यागादिक्रियावारणाय 'कर्मजन्यः' इति ॥ स च कर्मनाशाजलस्पर्शकीर्तन—भोग—तत्त्वज्ञानादिना नश्यति ॥ अधर्मलक्षणमाह—निषिद्धेति ॥ 'वेदेन' इत्यर्थः ॥ धर्मवारणाय 'वेदनिषिद्ध' इति । निषिद्धक्रियावारणाय 'कर्मजन्यः' इति ॥ स च भोगप्रायश्चित्तादिना

---

१ द्वेषि ।

नश्यति ॥ एतावेव 'अदृष्टम्' इति कथ्यते, वासनाजन्यौ च ॥ वासना च विलक्षणसंस्कारः ।

**बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः। बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ॥**

(न्यायबो०) बुद्ध्यादयोऽष्टाविति ॥ बुद्धिसुखदुःखद्वेषप्रयत्नधर्माधर्मा इत्यर्थः ॥

**संस्कारस्त्रिधा—वेगो भावना स्थितिस्थापकश्चेति ॥ वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः॥ अनुभवजन्या स्मृतिहेतुर्भावना—आत्ममात्रवृत्तिः ॥ अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः॥इति गुणाः ॥**

(न्यायबो०) संस्कारं विभजते—संस्कार इति ॥

(पदकृ०) संस्कारं विभजते—संस्कार इति ॥ सामान्यगुणा[1]त्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान् संस्कारः ॥ घटा[2]दिवारणाय 'गुणत्वव्याप्य' इति । संयोगादिवारणाय 'आत्मविशेषगुणोभयवृत्ति' इति ज्ञानादिवारणाय 'सामान्यगुण' इति ॥ द्वितीयादिपतनासमवायिकारणं, वेगः ॥ रूपादिवारणाय 'द्वितीयादिपतन' इति । कालादिवारणाय 'असमवायि' इति ॥ भावनां लक्षयति—अनुभवेति ॥ आत्मादिवारणाय प्रथमदलम् । अनुभवध्वंसवारणाय द्वितीयदलम् ॥ स्थितिस्थापकमाह—अन्यथेति ॥ पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकत्वम् ॥ गन्धत्वमादाय गन्धेऽतिव्याप्तिवारणाय 'संस्कारत्वव्याप्य' इति । भावनात्वमादाय भावनावारणाय 'पृथिवीसमवेत' इति । स्थितिस्थापकरूपान्यतरत्वमादाय रूपवारणाय 'जाति' इति ॥ इति गुणा इति ॥ द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः ॥ द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम् । सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम् ॥

---

१ गुणान्यतमविशे । २ पटादि ।

**चलनात्मकं कर्म ॥ ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् ॥ अधोदेशसंयोगहेतुरपक्षेपणम् ॥ शरीरसंनिकृष्टसंयोगहेतुराकुञ्चनम् ॥ विप्रकृष्टसंयोगहेतुः प्रसारणम् ॥ अन्यत्सर्वं गमनम् ॥**

( न्यायबो० ) कर्म निरूपयति—चलनात्मकमिति ॥

( पदकृ० ) चलनेति ॥ संयोगभिन्नत्वे सति संयोगासमवायिकारणं व ॥ हस्तपुस्तकवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् ॥ ऊर्ध्वे ॥ अपक्षेपणवारणाय 'ऊर्ध्व' इति । कालादिवारणाय 'असाधारण ॥पि बोद्धव्यम् ॥ अधोदेशेति ॥ उत्क्षेपणवारणाय 'अधोदेश' इति । क देवारणाय 'असाधारण' इत्यपि देयम् ॥ शरीरेति ॥ प्रसारणादिवा य 'शरीरसंनिकृष्ट' इति । कालादिवारणाय 'असाधारण ( पद ) म म् ॥ विप्रकृष्टेति ॥ उत्क्षेपणादिवारणाय 'विप्रकृष्ट' इति । कालादिवारणा साधारण ( पद ) म्' अप्यावश्यकम् ॥

**नित्यमेकमनेकानुगतं सामान्यम् ॥ द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ॥**

( न्यायबो० ) सामान्यं निरूपयति—नित्यमेकमनेकानुगतमिति । त्यत्वे सत्यनेकसमवेतत्वं जातेर्लक्षणम्' इत्यर्थः ॥ नित्यत्वविशेषणा ादाने अनेकसमवेतत्वमात्रोपादाने संयोगादावतिव्याप्तिः, तत्राप्यनेक वेतत्वस्य सत्त्वात् ॥ अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादा काशादावतिव्याप्तिः, तद्वारणाय 'अनेकसमवेतत्वम्' । अनेकसमवे ानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमा ौ जलपरमाणुगतरूपादौ चातिव्याप्तिः, जलपरमाणुगतरूपादे ाशगतैकत्वपरिमाणादेर्नित्यत्वात् समवेतत्वाच्च, अतः 'अनेक समवेतविशेषणम् ॥

---

अनेकद्रव्यसम. । अनेकसमवेतत्वस्य संयोगादौ सत्त्वात्तत्रातिव्याप्तिवा नित्यत्वविशेषणम् । २ रूपरसादौ ।

( पदकृ० ) नित्यमिति ॥ संयोगादिवारणाय 'नित्यम्' इति । कालादि-
रिमाणवारणाय 'अनेक' इति अनेकानुगतत्वं च समवायेन बोध्यम् । तेन
ात्यन्ताभावेऽतिव्याप्तिः ॥

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥**

( पदकृ० ) नित्यद्रव्यवृत्तय इति घटादिवारणाय 'नित्यद्रव्यवृत्तयः'
ति। आत्मत्वमनस्त्ववारणाय 'आत्मत्वमनस्त्वभिन्नत्वे सति' इत्यपि बोद्धव्यम्॥

**नित्यसंबन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्य एकमपराश्रितमेवावतिष्ठते,तावयुतसिद्धौ। यथा अवयवावयविनौ,गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति**

( न्यायबो० ) समवायं निरूपयति—नित्येति ॥ संबन्धत्वं वि
ष्टप्रतीतिनियामकत्वम् ॥ तावन्मात्रोक्तौ संयोगे ऽतिव्याप्तिः, अतो '
त्य' इति विशेषणम् ॥

( पदकृ० ) नित्येति ॥ आकाशादिवारणाय 'संबन्धः' इति । संय
वारणाय 'नित्य' इति । स्वरूपसंबन्धवारणाय 'तद्भिन्न' इत्यपि ॥

**अनादिः सान्तः प्रागभावः ॥ उत्पत्तेः पूर्वं कार्यस्य ॥**

( न्यायबो० ) प्रागभावं निरूपयति—अनादिरिति ॥

( पदकृ० ) प्रागभावं लक्षयति—अनादिरिति ॥ घटादिवारणाय प्र
दलम् । परमाणुवारणाय द्वितीयदलम् ॥ 'क पुनः प्रागभावः कस्मिन् व
ऽस्ति' इत्यत आह—उत्पत्तेरिति ॥ 'कार्यस्योत्पत्तेः प्राक् स्वप्रतियो
समवायिकारणे वर्तते' इत्यर्थः ॥

**सादिरनन्तः प्रध्वंसः ॥ उत्पत्त्यनन्तरं कार्यस्य ॥**

( न्यायबो० ) ध्वंसं निरूपयति—सादिरिति॥

( पदकृ० ) ध्वंसं लक्षयति—सादिरिति । घटादिवारणाय 'अनन्त
। आत्मादिवारणाय 'सादिः' इति ॥ उत्पत्तीति ॥ 'कार्यस्योत्पन

न्तरं स्वप्रतियोगिसमवायिकारणवृत्तिः ' इत्यर्थः स च ' ध्वस्तः ' इति प्र- त्ययविषयः ॥

**त्रैकालिकः संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः ॥ यथा ' भूतले घटो नास्ति' इति ॥**

( न्यायबो० ) अत्यन्ताभावं निरूपयति—त्रैकालिक इति ॥

( पदकृ० ) अत्यन्ताभावं लक्षयति–त्रैकालिक इति ॥ ' त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः ' ॥ ध्वंसप्रागभाववारणाय ' त्रैकालिक ' इति । भेदवारणाय ' संसर्ग ' इत्यादि ॥

**तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः ॥ यथा ' घटः पटो न' इति ॥**

( न्यायबो० ) अन्योन्याभावं निरूपयति—तादात्म्येति ।

( पदकृ० ) अन्योन्याभावं लक्षयति—तादात्म्येति । प्रागभावप्रध्वंसाभाववारणाय ' तादात्म्य ' इति ॥ अत्यन्ताभाववारणाय तादात्म्यत्वेनतादात्म्यसंबन्धो विशेषणीयः ॥

**सर्वेषामेव[2] पदार्थानां यथायथमुक्तेष्वेवान्तर्भावात् ' सप्तैव पदार्थाः' इति सिद्धम् ॥**

( न्यायबो० ) सर्वेषामिति ॥ " प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायस्यादिमसूत्र उक्तानां 'प्रमाणप्रमेयादीनाम्' इत्यर्थः ॥ विस्तरस्त्वन्यत्रानुसंधेयः ॥

( पदकृ० ) ' पदार्थज्ञानस्य परमप्रयोजनं मोक्षः ' इत्यामनन्ति ॥ स च आत्यन्तिकैकविंशतिदुःखध्वंसः ॥ आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् ॥ दुःखध्वंसस्येदानीमपि सत्त्वेनास्मदादीनामपि मुक्त्यापत्तिवारणाय कालीनान्तम् । मुक्त्यात्मकदुःखध्वंसस्यान्यदीयदुःखप्रागभावसमानकालीनत्वाद्वामदेवादीनां मुक्तात्मनामप्यमुक्तत्वप्रसंगात् ' स्वसमा-

१ प्रथमविषयः। २ मपि । ३ सर्वेषामपीति।

नाधिकरण ' इति प्रागभावविशेषणम्, दुःखानि चैकविंशतिः शरीरम्, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखं चेति ॥ दुःखानुषङ्गित्वाच्च शरीरादौ च गौणदुःखत्वम् ॥ तथा च ' आत्मावारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेरात्मज्ञानसाधननिदिध्याससाधनमननसाधनत्वं पदार्थज्ञाने संजाघटीति ॥ एवं च सति तत्वज्ञाने शरीरपुत्रादावात्मत्वस्वीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः। तेन दोषाभावः । तेन प्रवृत्त्यनुत्पत्तिः, ततस्तत्कालीनशरीरेण कायव्यूहेन वा भोगतत्त्वज्ञानाभ्यां कर्मणां नाशः' ततो जन्माभावः ॥

" नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ।
अभ्यासात्पक्वविज्ञाने कैवल्यं लभते नरः " ॥

इत्यादिवचनात् " तमेव विदित्वा ऽतिमृत्युमेति " इति श्रुतेश्च सगुणोपासनाकाशीमरणादेरपि तत्त्वज्ञानद्वारा मुक्तिहेतुत्वम् ॥ अत एव ' परमेश्वरः काश्यां तारकमुपदिशति ' इति सारम् ॥

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥ १ ॥**

( न्यायबो० ) इति श्रीमत्समस्तविद्वन्मुकुटश्रीगोवर्धनकृता ... ग्रहव्याख्या न्यायबोधिनी समाप्ता ॥

( पदकृ० ) चक्रे चन्द्रजासिंहो हि पदकृत्यमिदं शुभम् ।
परोपकारकरणं माधवो वीक्षतां परम् ॥ १ ॥

इति श्रीमत्तत्रभवद्गुरुदत्तशिष्यश्रीचन्द्रजासिंहविरचितं पदकृत्यं समाप्तिमगात् ॥



पुस्तक मिलनेका ठिकाना
खेमराज श्रीकृष्णदास
श्रीवेंकटेश्वर छापखाना.
मुंबई